स्यात् । कुज्जअंकुसुमं[45] ॥

**२. ३४.　　दशतिदहत्योर्डः स्यात्**

अनयोर्धात्वोराद्यस्य डः स्यात् । डंसइ, डंसणो, डंसो । डहइ, डहणो, डाहो ॥

**२. ३५.　　वा दोहददण्डदोलासु ।**

एष्वादेर्डो वा स्यात् । डोहलं । डंडो । डोला । पक्षे दोहलं इत्यादि । नामणिङि डोहलेइ, डोलेइ ॥

**२. ३६.　　परुषादीनां फः स्यात्**

आद्यस्येत्येव ।

परुषं परिघः परिखा परिधिः पनसश्च परुषादिः ॥

फरुसं । फलिहो । फलिहा । फलिही । फणसो ॥

**२. ३७.　　बिसस्य भः**

आद्यस्य भः स्यात् । भिसं । 'सिसिरेण कअं भिसिणिसंडं[46]', [= शिशिरेण कृतं बिसिनीषण्डम्, GS. I. 8 ] ॥

**२. ३८.　　मन्मथे वः स्यात् ॥ २३ ॥**

आद्यस्येत्येव । वम्महो ॥

**२. ३९.　　लाङ्गूलादेर्णो वा**

आद्यस्य णो वा स्यात् । लंगूलं, णंगूलं । लंगलं, णंगलं[47] । अस्फुटवाग् लोहलः[48] । लोहलो णोहलो ॥

**२. ४०.　　षट्शावकसप्तपर्णे छः ।**

एषु आद्यस्य छः स्यात् । छप्पओ, छम्मुहो । छावओ[49] । स्वार्थिकस्य कस्याप्राधान्यात् छाओ । छत्तिवण्णो ॥

**२. ४१.　　नो णः**

आद्यस्येति निवृत्तम् । 'आदेर्वा ( PS. II. 43 )' इति[50] वक्ष्यमाणत्वात् । सर्वत्र नस्य णः स्यात् । नयनं णअणं । वणं । वाणरो । अयुक्तस्येत्येव ।

---

45 NI कुअ॰; O कुज्जं॰; A same as B; G कुन्दकुसुमं.

46 B संढं; U सिण्डं, G सिण्णं; IO सिण्णं.　47 U om.

48 G alone adds this sent.; cf. Vr. II, 40.　49 B reads छावओ.

50 U आद्येनेति; G आद्यावेति; IO आद्येनेति; A same as B.

मंथो (= मन्थः)। मंथणं। चंदणं। चंडणं। चंडणं चंडणो दाढादित्वात् ॥

२. ४२. **द्वित्वेऽपि**

नकारस्य द्वित्वे सत्यपि णः स्यात्। युक्तत्वादप्राप्तौ वचनमिदम्। उण्णओ। सण्णओ। उण्णमइ। उण्णेइ। प्रतिपन्नम् पडिवण्णं। अत्र द्वौ नकारौ णत्वं प्राप्तौ। केचिदेतादृशेषु विकल्पमिच्छन्ति – आसन्नं, आसण्णं। सन्नद्धं, सण्णद्धं,– 'सन्नद्धं परबलं रणायाससहं' (BH, XIII, 45) इति भट्टिः ॥

२. ४३. **आदेर्वा**

आदेर्नकारस्य णो वा स्यात्। नाराअणो, णाराअणो। नअरं, णअरं[51] ॥

२. ४४. **शषयोः सः**

सर्वत्र शषयोः सः स्यात्। सेसो। विसमसरो ॥

२. ४५. **दशनि हः स्यात् ॥ २४ ॥**

दशन्शब्दे शस्य हः स्यात्। दह। एआरह। बारह[52]। तेरह। चउद्दह। पण्णरह। सत्तरह। अट्ठारह। कथं 'दससु णहदप्पणेसुं'[53] [= दशसु नखदर्पणेषु, SK. II, 17. 4]। प्रायोऽनुवृत्तेः समाधेयम् ॥

२. ४६. **वा नाम्नि**

नाम्नि विषये दशन्-शब्दे शस्य हो वा स्यात्। दहरहो, दसरहो। दहबलो जिनभेदः[54], दसबलो। दहमुहो। दसमुहो ॥

२. ४७. **दिवसपाषाणयोः सयोश्चैवमेव स्यात्।**

एवमेव हो वा स्यादित्यर्थः। दिअसो, दिअहो। पाहाणो, पासाणो ॥

२. ४८. **छायायां[55] यस्य तथा वाच्यश्चेदातपाभावः[56] ॥ २५ ॥**

यस्य यकारस्य[57] तथा हो वा[58] स्यात्। स्पष्टमन्यत्। छाही – 'आदीतौ बहुलम् (PS. V. 31)' इतीत्। पक्षे छाआ ॥

इति श्रीमार्कण्डेयकवीन्द्रकृतौ प्राकृतसर्वस्वे भाषाविवेचने महाराष्ट्र्याम् अयुक्तवर्णविधिर्द्वितीयः पादः ॥ २ ॥

---

51 UG नगरं. 52 B reads तेरह after this word.
53 G दसमुहदप्पणेसुं; IO °दप्पणेसु; A om. 54 UIO om.
55 UIGO छायाया. 56 IO °श्चेमतपा°; U °श्चेदामतपा; GA agree with B.
57 UIOA om. 58 UIGO om.

## तृतीयः पादः ।

### ३. १. उपरिस्थाः कगडत[1]दपषसो लोप्याः

उपरिस्थितौ[2] एते नव वर्णा लोप्याः स्युः । सोभाग्गुत्तं । मुद्दं । खग्गो । उक्कंठा[3] । उत्तमे[4] तल्लोपे पुनर्द्वित्वम् उत्तमं । उप्पलं । मुग्गो । सुत्तो । सद्दो । खुज्जो । छट्ठो । खलिअं । षट्पदे छप्पओ । षण्मुखे छम्मुहो । स्थानिवद्भावाट्टलोपः । उपरिस्था इति किम् । अक्को । मुक्खो ॥

### ३. २. अधो मनयः ।

अधः स्थिता मनयो लोप्याः स्युः । युग्मे जुग्गं । भग्ने भग्गं । सौख्ये सोक्खं ॥

### ३. ३. लवराः सर्वत्र

सर्वत्र उपर्यधो वा लोप्याः स्युः । वक्कलं । शुक्ले सुक्को । शब्दे सद्दो । बिल्वे बेल्लं । शक्रे सक्को । अक्को[5] ॥

इह सूत्रत्रये लक्ष्यानुरोधेन लोपः क्वचिदुपर्येव, क्वचिदध एव वानुसंधेयः । तथाहि—जुग्गं लग्गं इत्यादौ न गलोपः, बेल्लं बिल्लं पल्लवं इत्यादौ न ललोपः, भंव्वं[6] उव्विंण्णं[7] इत्यादौ न वलोपः, धम्मो घम्मो इत्यादौ न मलोपः ॥

### ३. ४. द्रे रो वा

लोप्य एव । चंद्रो, चंदो । इंद्रो, इंदो । भद्रं, भद्दं । विद्रावणं[8] इत्यत्र द्र-आदेशसामर्थ्यान्न लोपप्रसंगः ॥

### ३. ५. सर्वेङ्गिते ज्ञो ञः ॥ २६ ॥

अनयोरुपपदयोर्ज्ञकारे ञो लोपः । सव्वज्जो । इंगिअज्जो ॥

### ३. ६. ण्णुअ जाणुअ इत्येतावप्यकृतज्ञादिषु स्याताम् ।

अकृतज्ञादिषु ज्ञो ण्णुअ जाणुअ इत्येतावादेशौ स्याताम् । ण्णुअ इति

---

1 UIOG °क्सज°. 2 A स्था°. 3 IO उक्कंथ.
4 UIGO उमे; A om. 5 UIGO om.
6 भर्व्वं; U ऊर्ध्वं; I उर्ध्वं; O उध्व°; उर्ध्वंता; A om.
7 U अर्ध्वणं; G अद्दं; I ऊर्णं; O उर्ध्वंता; A om.
8 UG विद्रावणं; IO वैद्रावणं; B विद्रावणं; A om.; em. is mine.

द्वित्वापन्ननिर्देशोऽयम् ।

अकृतज्ञविज्ञदैवज्ञमनोज्ञाल्पज्ञसुकृतज्ञाः ।
अज्ञात्मज्ञपरज्ञाश्चित्तज्ञश्चैवमाद्याः स्युः ॥

अकअण्णुओ, अकअजाणुओ । विण्णुओ, विजाणुओ । देव्वण्णुओ, देव्वजाणुओ । मणण्णुओ, मणजाणुओ । अप्पण्णुओ, अप्पजाणुओ । सुकअण्णुओ, सुकअजाणुओ । अण्णुओ, अजाणुओ । अप्पण्णुओ, अप्पजाणुओ । परण्णुओ, परजाणुओ । चित्तण्णुओ, चित्तजाणुओ । कश्चिदिङ्गितज्ञमप्यत्रेच्छति । तन्मते इंगिअण्णुओ इंगिअजाणुओ इंगिअज्जो इति त्रयम् । अपिशब्दात् ञलोपोऽपि लक्ष्यानुरोधात् । अकअज्जो विज्जो मणज्जो इत्यादि ॥

**३. ७. श्मश्रुश्मशानयोरादिः**

लोप्य इत्येव । मंसू । मंसाणं[10] ॥

**३. ८. मध्याह्ने हकारश्च ॥ २७ ॥**

चकारः पूरणः । हकारो लोप्यः[11] । मज्झण्णो । ण्हत्वापवादोऽयम् ॥

**३. ९. श्लक्ष्णस्य शलौ क्रमेतः[12]**

लोप्यौ । लण्हं । सण्हं ॥

**३. १०. शचावुभावपि हरिश्चन्द्रे ।**

उभावपीत्यक्रमार्थम् । हरिअंदो ॥

**३. ११. हस्याधो णलमां स्थितिरूर्ध्वे**

हकारस्याधः स्थितानां णलमामूर्ध्वे स्थितिः स्यात् । पुव्वण्हो । कल्हारं । आह्लादे अल्हादो । बम्हणो । जिम्हो ॥

**३. १२. युक्तस्य**

अधिकारोऽयमा पादसमाप्तेः ॥

**३. १३. ठः ष्टस्य ॥ २८ ॥**

ष्टस्य ठः स्यात् । कट्ठं । दिट्ठी ॥

---

9 IO preserve this Kārikā in a corrupt from : दैवकमनोज्ञाल्पकसुकृतकाः । अज्ञात्मकपरपकाः ( -कं in O ) श्चित्तकश्चैवमाद्याः स्युः ॥ UAG including B have the correct text with single exception of U in अकृतज्ञ as अकृज्ञ.

10 U मंसणं, मंसाणं; G मंसणं, समंसाणी; IO मंसणं; मंसीणं; A correctly agrees with B.. 11 G °पूरणार्थः । मध्याह्ने हकारार्धलोप्यः । 12 UIOG शलो मतः.

३. १४. उष्ट्रे वा

ष्टस्य ठो वा स्यात् । उट्ठो, उट्टो ॥

३. १५. अस्थ्यादेर्नित्यम्

युक्तस्य नित्यं ठः स्यात् । अट्ठी । चउट्ठं, चउट्ठी । विसंठुलं[13] । ग्रन्थौ गण्ठा इति दाढादित्वात् । उट्ठिअं इत्यादि तिङ्विधौ सिद्धम् ॥

३. १६. थः स्तस्यास्तवस्तम्बे[14] ।

स्तवस्तम्बाभ्यामन्यत्र स्तस्य थः स्यात् । स्तनः[15] थणो । सुत्थिरो । थुई । स्तवस्तम्बयोस्तु तवो, तंबो[16] ॥

३. १७. खः स्थूणार्थे स्तम्भे

स्थूणार्थे स्तम्भे स्तस्य खः स्यात् । खंभो । अन्यत्र– 'ऊरुत्थंभेण रुहिअं गमणं'[17] [ = ऊरुस्तम्भेन रोधितं गमनम् ] ॥

३. १८. स्फोटे स्थाणौ च

अनयोर्युक्तस्य खः स्यात् । खोडो, खोडओ । खण्णू, नीडादित्वात् द्वित्वम् ॥

३. १९. न हरार्थे ॥ २९ ॥

स्थाणावित्येव । हरार्थे स्थाणौ खो न स्यात् । थाणुं पणमह ॥

३. २०. र्यय्याभिमन्यौ जः

र्यय्ययोरभिमन्यौ च युक्तस्य जः स्यात् । कज्जं । सुज्जो । न्याय्ये णज्जं । सौन्नाय्ये[18] सण्णज्जं । शय्यायां सेज्जा । अहिमज्जू[19] ॥

---

13 UIO विसंट्ठुलं; A om.

14 GABIO read स्तम्भे here; U स्तल्पे; I have corrected स्तम्भ to स्तम्ब; cf. Vr. III, 13. 15 B om.

16 U निम्बो; G तिम्भो; IO स्तम्बो; A तम्बो.

17 B ऊरुत्तंभेण रुंभिअं गमणं । A ऊरुत्तम्भेण रुम्भिअं गमणं । U ऊरुत्थम्भेण रुहिअं गमणं । G उरुद्दंभेण रुपा अग्गमणि । IO उरुम्थंभेण सहिअं मणं । Comparing these readings the original text seems to be what I have suggested above. This also confirms the reading स्तम्बे in Sū 16. For the meaning of रुहिअं ( = Skt. रोधितं ) see रुहण in PSM. p. 715.

18 U सांन्नाय्ये; IO साजाय्ये; A om.

19 U अहिमज्जु; G असमज्जं; IO अहिमज्जु; H om.

३. २१. **तूर्यादौ रः**

र्यस्येत्येव। तूर्यादौ र्यस्य रः स्यात्।

तूर्यपर्यन्तसौन्दर्यसौटीर्याश्चर्यधैर्यकर्म ॥

तूरं। पेरंतो। सुंदेरं। सोंडीरं[21]। अच्छेरं। धीरं। सूरशब्दात् सूरो॥

३. २२. **चौर्यसमे रिअः।**

चौर्यसमे र्यस्य रिअः स्यात्।

माधुर्यधुर्यगाम्भीर्याचार्यस्थैर्यमव्ययं तिर्यक् ॥

चोरिअं। माहुरिअं। धोरिअं, तुण्डादित्वादोत्वम्। गंभीरिअं। आआरिओ। तिरिअं[22]। थेरिअं। अनव्ययं तिर्यक्तः तेरच्छं। तिरच्छं इति दाढादित्वात्[23]। निरो माल्ये लिअं इति वक्तव्यम्। णिम्मालिअं॥

३. २३. **शौर्यार्यभार्याश्चर्ये वा**

एषु र्यस्य रिअः स्याद्वा। सोरिअं, सोज्जं। आरिओ, अज्जो। भारिआ, भज्जा। अच्छरिअं, अच्छेरं॥

३. २४. **पर्यस्तादिषु लो भवेत्॥ ३०॥**

र्यस्येत्येव।

पर्यस्तः पर्याणं पर्यङ्कः सौकुमार्यं च ॥

पल्लत्थो। पल्लाणं। पल्लंको। सोअमल्लं, सोमल्लं संधावल्लोपात्, सोमालं दाढादित्वात्॥

३. २५. **आर्द्रे द्रस्य न वा स्यादादेरोच्च**

युक्ताधिकारेऽपि द्रस्येति कृतम् अर्पिते निवृत्त्यर्थम्। आर्द्रे द्रस्य लो[24] न स्यात्। आदेरोच्च न वा स्यात्। ओल्लं, अल्लं। ओद्दं, अद्दं॥

३. २६. **अर्पितेऽप्येवम्।**

एवमिति आदेरोद्वा स्यात्। ओप्पिअं, अप्पिअं॥

---

20 G शौण्डीर्यं in place of शौटीर्यं. 21 G सोंडीरं; O साडीरं; A om.
22 B & Mss. read it before थेरिअं. 23 B puts '(?)' here.
24 UGIO क्ता; A om. 25 UIO ओप्पे.

३. २७. अधूर्तादौ र्तस्य टः स्यात्

केवट्टो । णट्टओ । वट्टिआ । णेवरी,[26] णच्चणं[27] इति 'भो व्रजिनृत्योः' (PS. VII. 79) इति च्चत्वविधानात् । वर्त्मनि नलोपः । वट्टं । धूर्तादौ तु धुत्तो ।

धूर्तार्तकीर्तिसंवर्तिवार्ताकार्तिकमूर्तयः ।
कर्तरीकीर्तनावर्तिवर्तमानमुहूर्तकाः ।
निर्वर्त्योद्वर्त्यमूर्तार्थे[28] कर्तृभर्तृमुखास्तथा ॥

अत्तो । कित्ती । निर्वर्त्ये यलोपे णिव्वत्तं । कत्ता, कत्तारो । भत्ता, भत्तारो । हत्ता, हत्तारो ॥

३. २८. मृत्तिकायां च पत्तने ॥ ३१ ॥

अनयोर्युक्तस्य टः स्यात् । मट्टिआ । पट्टणं ॥

३. २९. गर्ते डः

र्तस्य डः स्यात् । गड्डो ॥

३. ३०. गर्दभादौ र्दः

गर्दभादौ र्दस्य डः स्यात् ॥

गर्दभसंमर्दौ विच्छर्दिवितर्दी कपर्दविच्छर्दौ ॥

गड्डहो । संमड्डो । विच्छड्डी । कवड्डो । विच्छड्डो दारुहस्तकः[29] । तर्दुरिति केचित् । तड्डू ॥

३. ३१ त्थ्यद्यां चछजाः स्मृताः ।

यथासंख्यमेव । सच्चं । पच्छं । विज्जा ॥

३. ३२. न व्यत्ययादौ

व्यत्ययादौ नैते स्युः ।

व्यत्ययचैत्यात्ययसामर्थ्यातिथ्यानवद्यपद्ये च ।
उद्यतमित्यत्र गणे केचिद् गद्योद्यमौ न वेच्छन्ति ॥

वत्तओ । चइत्तं । अत्तओ । सामत्थं । आइत्थं । अणवद्दं । पद्दं । उद्दअं ।

'गाढालिंगणरहसुद्दअम्मि दइए लहु समोसरइ ।
माणंसिणीण माणो पीडणभीओ व्व हिअआदो ॥'

---

26 B णच्चिरी; UO णाच्चिरी; I णत्तिरी; G णच्चिरे; A om.; cf. GS V, 20.

27 UIG णच्चणं; A om.; O same as B.

28 U निवृत्तोद्वर्त°; G निवृत्ताद्वर्तमूर्तिः°; A निवृत्तोद्वर्त°.

29 G alone adds this word.

[ = गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति ।
मनस्विन्या मानः पीडनभीत इव हृदयात् ॥ H. 934 ]

इति सतशैती[30] । गद्ये गद्दं, गज्जं । उद्यमे उद्दमं, उज्जमं ॥

३. ३३. **ज्ञह्योर्झः**

अनयोर्झः स्यात् । संझा । मज्झं । ग्राह्ये गेज्झं । दाह्ये डज्झं ।

३. ३४. **साध्वसे ध्वस्य वा भवेत् ॥ ३२ ॥**

झ इत्येव । सज्झसं, सद्धसं । युद्धे द्धस्य वेत्येके । जुज्झं, जुद्धं ॥

३. ३५. **अस्निग्धादौ ग्धर्धयोर्ढः**

स्निग्धादेरन्यत्र ग्धर्धयोर्ढः स्यात् । विअड्ढो । वड्ढइ । कुलवड्ढणो । स्निग्धादौ तु–सिणिद्धो । मुद्धो । दुद्धं । णिद्धणो । गोवद्धणो । स्निग्धादिराकृतिगणः ॥

३. ३६. **द्धब्धयोरपि कुत्रचित् ।**

ढ इत्येव । वुड्ढो । परिअड्ढी । थड्ढो । लुब्धे लुड्ढो, लुद्धो इत्येके । कुत्रचिद्ग्रहणात् लोद्धओ, बुद्धो, सुद्धो, सिद्धी, समिद्धी इत्यादयः ॥

३. ३७. **ष्कस्कक्षां खः**

स्यात् । पोक्खरं । अवक्खरो । पक्खो ॥

३. ३८. **कचिन्न स्यात्**

धाणुक्को । निष्क्रान्तौ णिक्कंती । णिक्कंपो । सक्कारो[31] । सक्कअं ॥

३. ३९. **कचिद्वा**

णिक्को, णिक्खो । कंधो, खंधो । णिक्कमइ, णिक्खमइ इत्यादि ॥

३. ४०. **छः क्षुरादिषु ॥ ३३ ॥**

क्षुरादिषु क्षस्य छः स्यात् ।

क्षुराक्षिमक्षिकाक्षीरसदृक्षक्षेत्रकुक्षयः ।

---

30 UG सतपदी; I समसगदि; O सतसगदि, all of which account for the scribal error for the actual word सतशती. A om. thr entire portion of comm. after the Kārikā. B puts a '(?) and traces the passage to Kāvyapradīpa IV, 17.

31 UG संकारो; IO संस्कारो; A om.

इक्षुक्षुधाक्षुधौ चेति क्षुरादिः कथितो गणः ॥

छुरं । अच्छी । मच्छिआ । छीरं । सरिच्छो । छेत्तं । कुच्छी । उच्छू । छुहा । छुधं क्षुधं[32] । छुहा । कश्चिद् द्वित्वापन्नं छमिच्छति । तदयुक्तम् । 'धवलाअंतेसु सालिछेत्तेसुं[33]' [ = धवलायमानेषु शालिक्षेत्रेषु GS. I. 9 ] इत्यादिलक्ष्यविरोधात् ॥

**३. ४१. क्ष्मस्य च स्यात्**

छ इत्येव । लच्छी । यक्ष्मणि जच्छो[34] ॥

**३. ४२. क्षमादेर्वा**

छ इत्येव ।

क्षमावृक्षक्षणोत्क्षिप्तौ[35] लक्षणो दक्षवक्षसी ।
क्षारः[36] क्षुण्णं तथोक्षा चेत्यादयः स्युः क्षमादयः ॥

खमा, छमा । आप्रत्ययान्तनिर्देशात् कम्मक्खमो । क्षमाशब्दस्य विकर्षे[37] क्षमा इत्यस्यापि खमा, छमा । वृक्षे व्यवस्थितविभाषया अत्वपक्ष एव छः । वच्छो, रुक्खो । एवमुत्सवार्थ एव क्षणे छणो[38], कालविशेषार्थे तु 'वीसमामि खणं' [ = विश्राम्यामि क्षणम्, KP. III., SL. No. 13 ] । उक्खित्तो[39], उच्छित्तो । लच्छणो, लक्खणो । दच्छो, दक्खो । वच्छो, वक्खो । छारो, खारो । छुण्णं, खुण्णं । उच्छा, उक्खा ॥

**३. ४३. म्हः ष्मविस्मयपक्ष्मणाम् ।**

ष्मस्य विस्मयपक्ष्मणोश्च युक्तस्य[40] म्हः[41] स्यात् । उम्हा । विम्हओ । पम्हलं ॥

**३. ४४. फो वा श्लेष्मणि**

ष्मस्य फो वा स्यात् । सेप्फो । 'सेम्हा गरुई' [ = श्लेष्मा गुरुः ] स्त्रीत्वं लोकतः ॥

---

32 B puts ( ? ), but this also is the reading of Mss.

33 UIO ॰मालि॰; O ॰मालिच्छेछेसुसु.

34 UIOG क्ष॰; A agrees with B.

35 UIO क्षुण्ण॰; AG same as B

36 G क्षमा क्षुण्णं च॰; U क्षार॰.

37 UG विकल्पे.

38 BA. om.

39 I उक्खिमो; O दिक्खिमो; here confusion besween म and त्त is noticed.

40 Mss. add च here.

41 IO मः; G म्हः; U क्ष्मः.

३. ४५.　　कूष्माण्डे हः स्यादोत्वमुतस्तथा ॥ ३४ ॥

चेत्येव । तथेति हत्वे सति उत ओत्वं स्यात् । कोहंडो, कुम्हंडो । कोहंडी कुम्हंडी इति च लतायाम् । फले कोहंडं, कुम्हंडं । सत्वान्तरे नित्यमित्येके । कोहंडो भासेइ ॥

३. ४६.　　कार्षापणे[43] हः

ह इत्यनुवृत्तावपि पुनर्ग्रहणं[42] वानुवृत्तिनिरासार्थम् । युक्तस्य हः स्यात् । काहावणो ॥

३. ४७.　　चिह्ने[44] न्धः

युक्तस्य न्धः स्यात् । 'अणुराअपढुमइंधं[45]' [ = अनुरागप्रथमचिह्नम्, R. I. 24 ] ॥

३. ४८.　　ष्पस्पयोः फत्वमिष्यते ।

पुप्फं । फद्धी ॥

३. ४९.　　सस्य लोपः क्वचित्

स्पस्येत्येव । णिप्पंदो । परोप्परं[46] ॥

३. ५०.　　पस्य क्वचित्

लोपः स्यात् । वणस्सई वैनस्पतिः[47] । सिहइ स्पृहयति ॥

३. ५१.　　छत्वं भवेत् क्वचित् ॥ ३५ ॥

स्पस्येत्येह । छिहा स्पृहा ।

३. ५२.　　बाष्पेऽश्रुणि हः

अश्रुणि वाच्ये बाष्पे युक्तस्य हः स्यात् । बाहो । अन्यत्र— 'बप्फं हेमंत-

---

42 A हकारानुवृत्तौ. 43 IABO करणं, reading adopted after UG.

44 B चिन्हे; U lacks this rule but preserves the comm.

45 Mss. अनुराअपद्दिम० excepting A which agrees with B. B puts a bracket with blank space; I have traced it to R. I. 24 in which the actual reading is सोहग्गपढुमइण्हं thus differing from Mk's other quotations elsewhere which also show variants in large measure from the readings of the edited texts.

46 UA परप्परं; G परप्फरं; IO परस्परं.

47 B om. Skt equivalent which is found in Mss.

सरिआँसुं ' [ = बाष्पं हेमन्तसरित्सु ] ॥

३. ५३.   त्सप्सां छः स्यात्

पच्छिमं । अच्छेरं । मच्छरो । वच्छदरी । लिच्छा । अच्छरा । णिच्चलं इत्यादि संधौ विसर्गलोपात् ॥

३. ५४.   नोत्सुकोत्सवयोः ।

त्सस्य च्छो न स्यादनयोः । ऊसुओ । ऊसवो ॥

३. ५५.   वृश्चिके ञ्छः

श्चस्य ञ्छः स्यात् । विञ्छुओ ॥

३. ५६.   न्मस्य मः

स्यात् । वम्महो । सम्मिगो ॥

३. ५७.   णो म्नज्ञपञ्चदशादिषु ॥ ३६ ॥

म्ने ज्ञे पञ्चदशादिषु युक्तस्य च णः स्यात् । पज्जुण्णो । णिण्णं । विण्णाणं । अहिण्णाणं । पण्णरह । पञ्चाशत् पण्णासा । पञ्चशती पण्णसई । पञ्चविंशतिः पण्णवीसा ॥

३. ५८.   चत्वरे चः

युक्तस्य चः स्यात् । चच्चरं ॥

३. ५९.   मृदुत्वे कः

युक्तस्य कः स्यात् । मउक्कं ॥

३. ६०.   पः क्मकुड्मलयोर्भवेत् ।

क्मस्य कुड्मले युक्तस्य च पो भवेत् । रुप्पिणी । कुप्पलं ॥

३. ६१.   वात्मनि

आत्मनि युक्तस्य पो वा स्यात् । अप्पा, अत्ता । अप्पाणो, अत्ताणो । तादात्म्यमाहात्म्ययोः प एव नित्यमभिधानात् । ताअप्पं । माहप्पं ॥

---

48 B सरआसुं which is definitely incorrect and not authorised by Mss.: A om.

49 UG सम्मगो; IO वम्मसो; A same as B.

50 This is an additional ex. found only in A.

51 Mss. and B मित्य°; B brackets नित्यम् and puts '(?)' by the side of the word. It is surely a scribal error; cf. Rt. III, 12.

३. ६२. **भो ह्वः**

ह्वो भः स्याद्वा । गब्भरो, गह्वरो । जिब्भा, जीह्वा । पब्भो, पह्वो ॥

३. ६३. **वस्यापि विह्वले**

विह्वले ह्वो भः स्यात् । वस्यापि भः स्यात् । भेब्भैलो । वानुवृत्तेः विह्वलो ॥

३. ६४. **भिन्दिपाले ण्डः ॥ ३७ ॥**

युक्तस्य ण्डः स्यात् । भिंडिवालो ॥

३. ६५. **वृन्ते ण्टः**

युक्तस्य ण्टः स्यात् । वेंटं ॥

३. ६६. **शादिशिरःस्थयोर्नणोर्ण्हः**

शादयः शषसहाः । तच्छिरःस्थयोर्नणोर्ण्हः स्यात् । पण्हो । उण्हं । ण्हाणं । श्लक्ष्णे सण्हं, 'उपरिस्थाः' ( PS. III. 1.) इति कलोपे ण्हत्वम् ॥

३. ६७. **स्निहेर्न स्यात् ।**

ण्ह इत्येव । सिणिज्झइ, णिज्झेइ । सिणिद्धो, णिद्धो । सिणहो, णेहो ॥

३. ६८. **तीक्ष्णे निशितार्थे खः**

निशितार्थे तीक्ष्णे युक्तस्य खः स्यात् । तिक्खो सरो । अन्यत्र तिण्हो रइकिरणो ॥

३. ६९. **शेषादेशावनादौ द्विः ॥ ३८ ॥**

अनादौ वर्तमानौ शेषादेशौ द्विः स्याताम् । लुप्तावशिष्टः शेषः । मुग्गरो । रच्छा । विण्णाणं । आदौ तु गामो, खंभो ॥

३. ७०. **वर्गेऽत्र युजः पूर्वः**

युगिति समानां द्वितीयचतुर्थानां संज्ञा । अत्र द्विर्भावे वर्गे वर्गमध्ये युजो द्वितीयचतुर्थयोः स्थाने पूर्वः । कोऽर्थः । द्वितीयस्य प्रथमश्चतुर्थस्य तृतीयः स्यात् । रुक्खो । अग्घो । रच्छा । उअज्झाओ । सेट्ठो । वुड्ढो ।

---

52 B भिब्भलो; I भेबलो; O भवलो; reading adopted after UGA, of VR. III; 47. 53 BIO om.

54 U °ण्णो; G तिण्णो; I ण्मो; O गामो; A तखा.

55 UIO युक्तः; so also in comm.

56 UO रक्खा; I·रवक्खा; G रक्कखा; A om.

पत्थिदो । मुद्धो । पुप्फं । गब्भं । युज इति किम् । ककसो । रज्जू । गड्डहो । मग्गो ॥

३. ७१. नीडादौ

अनादौ द्विरिति द्वयमेवानुवर्तते । न शेषादेशयोरिति । नीडादावनादौ द्विः स्यात् ॥

नीडव्याहृतमण्डूकस्रोतांसि प्रेमयौवने ।
त्रैलोक्यस्थूलतैलर्जुस्थूणार्थस्थाणुमुख्यकाः ॥

णेड्डं । वाहित्तं, ऋष्यादित्वादित्त्वम् । मंडुक्को । सोत्तो । पेम्मं । जोव्वणं । तेल्लोक्कं । यौवनत्रैलोक्ययोर्मध्य एव द्वित्वं लक्ष्यानुसारात् । थुल्लं । तेल्लं । उज्जू, ऋत्वादित्वादृत उत्वम् । खण्णू, अन्यत्र थाणू ॥

३. ७२. आम्रकम्रताम्रे बः ।

एषु रेफलोपे सति बकारागमः स्यात् । व्याख्यानतो विशेषलाभ इति न्यायात् मकारस्याध एव । अंबो । कंबो । तंबो[57] ॥

३. ७३. न रहौ

रहौ द्विर्न स्याताम् । धीरं । जीहा । बाहो ॥

३. ७४. आङो ज्ञो णः

आङ उत्तरस्य ज्ञ आदेशो णो द्विर्न स्यात् । आणा । आणत्ती । आणवेइ । आङ इति किम् । विण्णाणं । अहिण्णाणं ॥

३. ७५. सेवादौ वा

सेवादावनादौ द्विर्वा स्यात् । क्वचिदप्राप्ते क्वचित्प्राप्ते च विकल्पः ।

सेवा कौतूहलं दैवं निहितं नखजानुनी ।
त्रैलोक्यं कर्णिकारश्च वेश्यौ भूर्जं च दुःखितम् ॥
उत्सवोत्सुकदीर्घैकशिवतूष्णीकरश्मयः ।
दुष्करो निष्कृपो रात्रीश्वरदुर्लभनायकाः ॥

---

57 UIOG °व्याहृत; A same as B. A adds after Kārikā एषु द्वित्वं which is superfluous.

58 U alone adds here अम्बो which is definitely a mistake.

59 UIO वेस्सा; G reads वेस्सा; correctly but brackets स्सा; A om. the entire Kārikā and the whole set of exs. after सेव्वा.

वद्धापिवादयः कर्मकरो मन्ये परस्परम् ।
अश्वाश्रचित्तपुष्याद्याः प्रादीणश्च श्रमिश्वसी ॥

सेवा, सेव्वा । कोउहलं, कोउहल्लं । देवं, देव्वं । णिहिअं, णिहित्तं । णहो, णक्खो । जाणू, जण्णू । तेल्लोअं, तेल्लोक्कं । कणिआरो, कण्णिआरो[61] । वेसा, वेस्सा । भूजं, भुज्जं । दुहिओ, दुक्खिओ । ऊसवो, उस्सवो । ऊसुओ, उस्सुओ । दीहो, दिग्घो । एओ, एक्को । सिवो, सिव्वो, । तुण्हीओ, तुण्हिक्को । रसी, रस्सी । दुअरो, दुक्करो । णिइवो, णिक्किवो । राई, रत्ती । ईसरो, इस्सरो । दुलहो, दुल्लहो । णाअओ, णाअक्को । वत्प्रत्ययोऽव्ययः चक्रवद् भ्रमतीत्यत्र चक्कं व्व भमइ, चक्कं व भमइ । वाशब्दस्य यथादित्वेन ह्रस्वत्वपक्ष एव द्वित्वम् । चंदो व, चंदो व्व । अन्यत्र चंदो वा, चंदो पिव, चंदो प्पिव । आदिना मेहो मिव, मेहो म्मिव । चंदव्व, मेहप्पिव, रुक्खव्विव, पुत्तम्मिव इत्यादौ संधावोकारलोपो दृश्यते । कम्मअरो, कम्मकरो । मणे, मण्णे । परोवरं, परोप्परं, संधावोत्वम् । आसो, अस्सो । आसं, अस्सं । चिअं, चित्तं । चिणमिति केचित् । पूसो, पुस्सो । प्रादेरिण उत्तरौ श्रमिश्वसी धातू यथा — विस्समइ, वीसमइ । विस्ससइ, वीससइ । वीसामो, विस्सामो । णीसासो, णिस्सासो । ऊसासो, उस्सासो । ऊससइ, उस्ससइ इत्यादि ॥

३. ७६. समास उत्तरतः ॥ ३९ ॥

समास उत्तरत उत्तरपदे आदेर्द्वित्वं वा स्यात् । — 'परव्वसो अप्पा' [ = परवशः आत्मा, Ra. II. 1 ] परवसो अप्पा । — 'ववसाअरइपओसो' [ = व्यवसायरविप्रदोषः, R. I. 14 ] । रइप्पओसो । — 'बद्धप्फलम्मि कुसुमे' [62] [ = बद्धफले कुसुमे, R. III. 6 ] । बद्धफले ।

३. ७७. श्लिष्टम्लिष्टक्रियारत्नशार्ङ्गेषु स्याद् विकर्षणम् । पूर्वं तत्स्वरवच्च स्यात्

युक्तस्य विकर्षणं विश्लेष इत्यर्थः । अधिकारोऽयमा पादसमाप्तेः[63] । एषु विकर्षणं स्यात् । तच्च पूर्वं तत्स्वरवच्च स्यात् । तस्य विकृष्यमाणस्य स्वरोऽस्मिन्निति

---

60 IO 'स्सा. 61 UG कण्णिकारो ; IO कण्णिकारो.

62 B has left a blank bracket here with a view to tracing it. This is my own identification. 63 UG परिसमाप्तेः

तत्स्वरवत् । सिलिट्ठं । मिलिट्ठं[64] । किरिआ । ‘ झाणेण वेअपढणेण कदु-क्किं[65]आहिं ’ [ = ध्यानेन वेदपठनेन क्रतुक्रियाभिः, KM. I. 24 ] इति राजशेखरस्यापपाठ एव । रअणं । सारंगपाणी ॥

**३. ७८. कृष्णे वा स्यात्**

विकर्षणं तत्स्वरवच्च पूर्वं वा स्यात् । कण्हो मेहो[66] । कसणो ॥

**३. ७९. न नामनि ॥ ४० ॥**

नामनि संज्ञायां कृष्णे विकर्षणं न स्यात् । कण्हो त्ति णंदत[67]णँओ ॥

**३. ८०. इः श्रीह्रीक्लान्तम्लानक्लिशिषु**

पूर्वमिति विभक्तिविपरिणामेन सप्तम्यन्तमेवानुवर्तते । एषु विकर्षणं स्यात्, तत्र पूर्वस्मिन् इः स्यात् । सिरी । हिरी । किलंतो । मिलाणो । क्लिशिर्धातुः । किलिस्सइ, किलेसइ ॥

**३. ८१. प्रस्य च स्वप्ने ।**

[68]स्वप्ने प्रस्य विकर्षणं स्यात् । तत्र पूर्वस्मिन्निश्च । सिविणो ॥

**३. ८२. र्शर्षर्हेषु स्यात्**

एषु विकर्षणं स्या[69]त् । पूर्वस्मिन् इश्च । आअरिसो । वरिसणं । गरिहा ॥

**३. ८३. स्पृशिदृश्योर्वा स्यात्**

अनयोर्धात्वोः संबन्धिनः र्शस्य विकर्षणं स्यात् । पूर्वं तत्स्वरवच्च । फरिसेइ, फंसेइँ[70] । फरिसो, फंसो[71] । दरिसणं, दंसणं ॥

**३. ८४. क्वचि[72]न्न स्यात् ॥ ४१ ॥**

र्शर्षयोर्विकर्षः क्वचित् न स्यात् । पार्श्वे पासं । वर्षासु वाँ[73]साओ । ‘वासाग-

---

64 UG om. 65 Acc. to Dr. Ghosh's edition the verse No. is 23. The reading of Mss. is very corrupt. UIO आगेणवेअपचिक्केण कदुक्कियाहिं ; G आगेण वेअप. चिकीणवदुकिआहिं ; A om.

66 UGIO चमुहो ; A मोहो; IO read कण्वो for कण्हो ; G कणोह.

67 U कुम्भो । उणन्यउणओ ; IO कुम्भो । उतान्यतणओ ; G कुम्भो उणअउणओ ; AB read correctly.

68 A inserts च after प्रस्य and om. स्वप्ने.

69 Mss. om. स्यात्. 70 UIO फसेहि; G फसेव.

71 UIO फस्सो; G पस्सो. 72 U inserts वा here.

73 UIOG वर्षास वासीओ.

म्मि मग्गो घरहुत्तमणेण पहिएण[74] [ = वर्षागमे मार्गः गृहाभिमुखमनसा पथिकेन, GS. VII. 94 ] ॥

३. ८५. बर्हार्होरच

बर्हे[75]र्हधातौ च हस्य विकर्षः स्यात्। पूर्वस्मिन् अः स्यात्, चकारादिश्च। बरहं, बरिहं। बरही, बरिही। अरहइ, अरिहइ। अरहणा, अरिहणा ॥

३. ८६. दशार्हे हलुक्

दशार्हे हकारे हलुक् स्यात्। दसारो ॥

३. ८७. वज्रस्य वा प्रागित्।

वज्रस्य युक्तविकर्षो वा स्यात्। तत्र प्रागिच्च स्यात्। वइरं, वज्जं ॥

३. ८८. प्लोषप्लुष्टश्लोकस्नायुषु नित्यं

एषु विकर्षो नित्यं स्यात् प्रागिच्च। पिलोसो पिलुट्ठो। सिलोओ। सिणाऊ॥

३. ८९. न वा स्नातेः ॥ ४२ ॥

स्नातेर्विकर्षो न वा स्यात् प्रागिच्च। सिणाइ, ण्हाइ[76]। सिणाणं, ण्हाणं ॥

३. ९०. एवं स्निहेरपि स्यात्

स्निहेर्धातोरपि एवमिति[77] विकर्षो वा प्रागिच्च। णिज्झइ, सिणिज्झइ। णिद्धो, सिणिद्धो। णेहो, सिणेहो ॥

३. ९१. पूर्वे वस्यापि मत्वं च।

पूर्वे[78] विकर्षो वा स्यात् प्रागिच्च। वकारस्यापि मत्वं च स्यात्। पुरिमं, पुव्वं ॥

३. ९२. अः क्ष्माश्लाघ्योः

क्ष्माशब्दस्य श्लाघृधातोश्च विकर्षः स्यात् प्रागकारश्च[79]। न वेति निवृत्तम्। छमा। सलाहइ। सलाहा। सलाहणिज्जो ॥

---

74 The readihg of Mss. is very corrupt. वासीगमम्मि मग्गो घरहुत्त-मणेण पहिएण, IO °हुत्तमणेण पहिओण; G °वग्गोधुरहुत्तमणेण गवओण; A om.

75 U om. हकार, इकारो instead of ह.

76 I reads ण्वा ( ण्या in O ) for ण्हा.

77 Mss. insert these two words here.

78 UIO पूर्वं. 79 A प्रागश्च.

३. ९३. ज्यायामीत् स्यात्

ज्याशब्दे विकर्षः स्यात् । प्राक् चँ दीर्घेकारः स्यात् । जीआ ॥

३. ९४. उत्पद्मतन्व्याद्योः ॥ ४२ ॥

पद्मादौ तन्व्यादौ च विकर्षः स्यात् प्रागुच्च ।

पद्मवत्सरकाश्मीरवेश्मसद्माम्बरादयः ॥
तन्वी लघ्वी मृद्वी पट्वी साध्वी च गुर्वी च ।
पूर्वा च बह्वयाशिस्वी पृँथ्वी चेत्यादयः प्रोक्ताः ॥

पउमं, पउमा । पोम्मा, पोम्मराओ दँढादित्वात् । घसुँमरो । कँसुमीरा । वेसुमो । सउमो । अउमरो । तणुई । लहुई । मउई । पँडुई । साहुई । गरुई । पुरुई । बहुई । असिसुई । पुहुई, ऋत्वादित्वादत उत् ॥

३. ९५. चार्वङ्ग्यां रस्य च लुक्

विकर्षः प्रागुच्च स्यात् । रस्य च लुक् स्यात् । चाउअंगी ॥

३. ९६. द्वारे वाद्योः क्रमाल्लुक् चँ ।

द्वारे विकर्षो वा स्यात्, प्रागुच्च । दुआरं । विकर्षाभावपक्षे दवयोः क्रमात् लुक् स्यात् । वारं । दारं ॥

इति श्रीमार्कण्डेयकवीन्द्रकृतौ प्राकृतसर्वस्वे भाषाविवेचने
महाँराष्ट्र्यां युक्तवर्णविधिस्तृतीयः पादः ॥ ३ ॥

---

80 U om. च; G प्रागिकारस्य दीर्घत्वम्; A प्रागिकारश्च.
81 Mss. excepting A are corrupt.  82 UG वाक्षा.
83 UI अपखुमरो; G अघ°; O अपस°.  84 BUGIO कखुमीरा; A om.
85 UIGA om.  86 G om. the Sū.  87 G om.

## चतुर्थः पादः ।

**४. १. संधौ बहुलमचामज्लोपविशेषाः**[1]

परः संनिकर्षः संधिः । संधौ विषये अचामज्लोपो विशेषश्चेत्येते बहुलं स्युः । अज् यथा—मज्झिमं, उत्तिमं, सप्तपर्णः छत्तिवण्णो, मरहट्ठो इत्यादौ नित्यम् । जउणाअडं, जउणअडं । लच्छिवई, लच्छीवई । मुअवत्तं, मुआवत्तं । वहुमुहं, वहूमुहं । वेणुवणं, वेणूवणं । कण्णिआरो कण्णआरो[2] । परप्परं, परुप्परं । वाउलो, वाऊलो । अक्खउहिणी, अक्खोहिणी । चंदउदओ, चंदोदओ इत्यादौ विकल्पः । लोपो यथा—पलगण्डे पलंडो, वेतण्डे वेंडो[3] इत्यादौ नित्यम् । सोअमल्लं, सोमल्लं । पाअवडणं, पावडणं । पाअवीढं, पावीढं । अंधआरो, अंधारो । खंधाआरो, खंधारो । कुंभआरो, कुंभारो । चक्कआओ, चक्काओ । राअउलं, राउलं । राअउत्तो, राउत्तो । काअइंची, काइंची इत्यादौ विकल्पः । विशेषो रूपान्तरप्राप्तिर्यथा—उहअवासं, उभयपार्श्वं, अवहोवासं[4] । उहअमुहं, उभयमुखं, अवहोमुहं[5] । जअक्कारो, जोक्कारो । सुअण्णं, सोण्णं । परोवरं, परोप्परं । एवं बाहुल्यान्नानाविधा विधयो लक्ष्यानुसारतो ज्ञेयाः ॥

**४. २. युते ह्रस्वः ।**

युते युक्ते परे दीर्घो ह्रस्वः स्यात् । श्यामलाङ्गः सामलंगो । मइंदो मृगेन्द्रः । सल्लुद्धारो । रण्णा । रण्णो । तिण्णं । बाहुल्यात् पुणोत्तं, तेत्तीसा, णेत्तं, गोत्तं, दोण्णं, इत्यादि ॥

**४. ३. शेषे द्वित्वमनाप्ते दीर्घः स्यात्**

परे इत्यर्थे सप्तमी । ऊसुओ । ऊसवो । वीसासो । वीसामो । अश्वः अस्सं[9]

---

1 UA °मङ्लोप°; IO मतामङोप°; G agrees with B correctly.

2 IO कण्णि(°ण्णि in O)कारो.

3 B puts '(?)' here, but this is the reading of Mss.

4 UIO वेतण्डो; Ga grees correctly with B; A om. portion after लच्छीवई. 5 In these two exs., UIO read ह instead of ढ.

6 UGIO अहोवासं. 7 UIOG अहोमुहं.

8 G alone reads it. 9 UG प्रश्नः; A om. प्रश्नः; UIO अश्नं: for अस्सं; G same as B.

आसो आसं । बाहुल्यात् दुर्लहं,– ' दरपुरिसाइरि विसमिरि जाणहु पुरिसाण जं दुक्खं ' [ =दरपुरुषायिते विश्रामशीले जानीहि पुरुषाणां यद् दुःखम्, GS. I. 52 ] इति सप्तशती ॥

४. ४. गुण इतः[11] क्वापि ।

स्यात् । गणेसरो, चंदोदओ, पिओवगमणं, इत्यादौ नित्यम् । वेग्गो, विअग्गो । वेंजणं, विअंजणं, इत्यादौ विकल्पः । अविएत्थ, तुहत्ति, अहरुट्ठं, इत्यादौ नित्यम्[12] ॥

४. ५. विंशत्यादौ बिन्दोर्लुक् तेर्वा दीर्घता चादेः ।

विंशत्यादौ बिन्दोर्लुक् स्यात्, तेर्लुक् वा स्यात्, आदेश्च दीर्घता स्यात् । वीसा, वीसई । तीसा । तेत्तीसा । तेवीसा, तेवीसई ।– ' आदीतौ बहुलम् ' ( PS. V. 30 ) इत्यात् ॥

४. ६. ओत्वं लुक् च विसर्गस्य

क्वचिदोत्वं क्वचिद् लुक् च स्यात् । सरोरुहं, सररुहं । मणोहरो, मणहरो । क्वचिल्लुगेव । सरवरो । णहअलं । उरअडं । णिराउसा, णिरणुक्कोसो, णिरं-

---

10 G °त्वम्. 11 A इकः ; IO इति.

12 B puts query mark after this sent. In fact the exs. given here by Mss. as well as by B are as follows :—BUIO अविएत्थ, तुअइ, अहरोट्टं ; A om.; G अविवत्थ, तुअइ, अहसेट्टं. The Sū. in question is a controversial one. Mk enjoins इतः, but includes side by side उ also as is evident from the ex. चंदोदओ and पिओवगमणं. Rt. resorts to इ alone (cf. PK I. 5. 3 – ' परेण पूर्वेण च सार्वमाहुरिको गुणं क्वापि पदेषु धीराः ' ). The reading ' इकः ' of A is in accord with the Sū. of Rt. just quoted. The last three exs, however, have no direct bearing on the present Sū. of Mk. The word तुअइ (=Skt. तुहत्ति) is evidently a scribal error and the form अहरोट्टं is not allowed in Pkt (cf. He. I, 84). Hence I have emended the text as above ( also cf. Candrikā of Dikṣita on Vr. IV. 1 ). What Mk means to say is that in case of अविएत्थ the retension of ए is obligatory, while in case of तुहत्ति the elision of इ is obligatory, and in case of अहरुट्ठं absence of guṇa is obligatory. Here it is to be noted that the ex. चंदोदओ as being obligatory according to the present Sū. contradicts the use of optional form चंदउदओ as given in Sū. 1 in this Pāda by Mk.

तरं, णिरुवमं, दुराआरो, दुरासओ[13], दुरइक्कमो, पुणरुत्तं, पुणरवि, इत्यादयः प्रयोगाः संस्कृतादुन्नेयाः ॥

४. ७. दोर्लोपः स्यादुदुम्बरे ।

उंबरो ॥

४. ८. यसश्च संख्याशब्दानां

यसो लोपः स्यात् । तेरह । तेवीसा । तेत्तीसा[14] । तेचत्तारीसा[15] । तेवण्णासा । एवं शय्यादेराकृतिगणत्वात् ॥

४. ९. यावदादिषु वस्य वा ।

लोपः स्यात् ॥

यावत्तावद्देवकुलमेवमेवावटस्तथा ।
जीवितावर्तमानाद्या विज्ञेया यावदादयः ॥

जा, जाव । ता, ताव । देवउलं, देउलं । एअमेअ, एमेअ । अवडो, अंडो[16] । जीविअं, जीअं । 'संधौ' ( PS. IV. 1 ) इत्यादिना इः[17] स्यात् । आवट्टमाणो, अट्टमाणो । आदिशब्दात् आवट्टणा, अट्टणा । पावरओ, पारओ ॥

४. १०. कालायसे यस्य

लोपो वा स्यात् । कालाअसो, कालासो ॥

४. ११. दस्य हृदये

दस्य लोपो वा स्यात् । हिअअं, हिअं ॥

४. १२. जस्य भाजने ।

जस्य लोपो वा स्यात् । भाअणं, भाणं ॥

४. १३. अन्त्यस्य हलो नित्यं

लोपः स्यात् । जसो । मणो । इंदई[18] ॥

---

13 BUIO दुरीसओ; G दुरूसओ; A om.

14 UI तेत्तासा; O om.; AG same as B.

15 UGI तेत्तोरीसा; O तेत्तोरिसा; A om.

16 IO अवंतो; अंतो; U °त्तो, °त्तो; A om.

17 B इकारः; the reading is adopted after the Mss. with single exception of A which agrees with B. 18 UGIO इदइ.

४. १४. विद्युद्वर्जं स्त्रियामात् स्यात् ।

अन्त्यहल इत्येव । सरिआ । पडिवआ । विद्युति तु विज्जू[19] ॥

४. १५. रो रा

स्त्रियामन्त्यहलो रः स्थाने रा स्यात् । गिरा । धुरा ॥

४. १६. क्षुधि हा

क्षुधि अन्त्यहलो हा स्यात् । छुहा ॥

४. १७. शरदो दः स्यात्

अन्त्यहल इत्येव । सरओ ॥

४. १८. दिक्प्रावृषोः सः स्यात् ।

अन्त्यहल इत्येव । दिसा । पाउसो ॥

४. १९. आयुरप्सरसोर्वा स्यात्

अन्त्यहलः स इति च । आऊ, आउसो । अच्छरा, अच्छरसा ॥

४. २०. वक्रादौ बिन्दुरिष्यते ।

बिन्दुरागमः । स च लक्ष्यानुसारात् क्वचित् प्रथमाद्[20] वर्णात् क्वचिद् द्वितीयाच्च परः ।

वक्रत्र्यस्र[21]वयस्याश्रुश्मश्रुनिवसनदर्शनस्पर्शाः ।
शुल्कप्रतिश्रुतमनस्विगृष्टिपुच्छातिमुक्ताद्याः ॥

वंकं । तंसं । वअंसो । अंसू । मंसू । णिअंसणं । धातूपलक्षणमिति केचित् । विअंसणं । दंसणं । फंसो । सुंकं । पडिंसुअं[22] । बाहुल्यादिकारः स्यात् । मणंसी । गंठी । पुंछो । अइमुत्तं ॥

४. २१. मश्च

अन्त्यहलो मकारस्य बिन्दुः । किं । वणं । तुण्हिं[23] । 'संधौ' (PS. IV. 1) इत्यादिना ह्रस्वत्वमनुस्वारात् पूर्वं वक्तव्यम् ॥

---

19 UGO विज्जुं; I बिज्जुं; A om.  20 UG प्रथम; IO प्रथमा.

21 U क्रश; G त्र्यश; IO श्रक; A same as B.

22 B पडंसुसं which is corrupt.; UIO पडंसुअं: G पडंसुअं; A om. Em. is mine; cf. Vr. IV, 5.

23 UG तुण्हं; I तर्णं; O तुण्हं; A same as B.

४. २२. **अचि वा**

अचि परे मो बिन्दुर्वा स्यात् । घरं आअदो, घरमाँअदो ॥

४. २३. **नङोर्हलि**

हलि परे नङोर्बिन्दुः स्यात् । विंझो[25] । पंती ॥

४. २४. **तद्वर्गान्तो न वा वर्गे ।**

वर्गे परे बिन्दुस्तद्वर्गान्तो न वा स्यात् । हलं कड्डइ, हलङ्कड्डइ[26] । मंतं जवइ, मंतञ्जवइ । पिअं णेइ, पिअण्णेइ । हरिं णमइ, हरिण्णमइ । जलं मंथइ, जलम्मंथइ ॥

४. २५. **लुङ् मांसादौ**

मांसादौ बिन्दोर्लुग्[27] वा स्यात् ।

मांसं मांसलसंमुखमेवमिदानीं कथं नूनम् ॥

मंसं, मासं । मंसलं, मासलं । संमुहं, समुहं । एअ, एअं । इआणि, इआणिं । कह, कहं । णूण, णूणं । आकृतिगणोऽयम् ॥

४. २६. **सिंहे संस्कारादौ च नित्यं स्यात् ।**

बिन्दोर्लुगित्येव । सीहो । सक्कारो । सक्कअं । सक्किरिआ । सत्थवो । सत्थुअं । सत्थावो ॥

४. २७. **पुंसि न्सन्तप्रावृट्छरदः प्रेमादिवर्जं स्युः ।**

नन्ताः सन्ताः प्रावृट् शरदित्येते पुंसि स्युः प्रेमादिवर्जम् । कम्मो । जसो । पाउसो । सरओ । प्रेमादिवर्जमिति किम् । पेम्मं । सिरं । णहं । अच्छरा ॥

४. २८. **काश्मीरसीमोष्मेमानः स्त्रियाम्**

कसुमीरा । सीमा । उम्हा । इमन्प्रत्ययः ।— ' पत्ता दिणं वड्डिमा[28] ' [ = प्राप्ता दिनं वृद्धिम् ]

---

24 UGIBO पर॰; correction acc. to A which seems to be most sensible. 25 UGIO विंशो.

26 UG read ड and IO ढ in place of ड्ढ in these exs. G om. the 2nd ex. 27 BUIO बिन्दुः; em. acc. to G; A om.

28 A simply वड्ढिमा; U ड्ढ; I ड; O ढ; G च for ड्ढ.

४. २९. प्रश्नाक्षिसंधय: ।
पृष्ठरश्मी च वा

एते पञ्च स्त्रियां वा स्युः । पण्हो, पण्हा । अच्छि, अच्छी । संधि, संधी । पुट्ठं, पुट्ठी । रस्सी[29] ॥

४. ३०. अन्येषामत्र शिष्टानुसारतः ।

अत्र प्राकृतानुशासने अन्येषां लिङ्गं शिष्टप्रयोगानुसारतो[31] ज्ञेयम् । यथा— गुणा, गुणाइं । बिंदुणो, बिंदूइं । वअणो, वअणं । णअणो, णअणं, इत्यादि दिङ्मात्रम् ॥

४. ३१. अवापयोरोत्

अनयोरोद् वा स्यात् । ओवाहइ, अववाहइ । ओसरइ, अवसरइ ॥

४. ३२. माल्ये निरः

माल्ये परे[32] निर ओ वा स्यात् । ओमालिअं, णिम्मालिअं[33] ॥

४. ३३. उच्चोपस्य[34] कस्यचित् ।

कस्यचिन्मते उपस्य उत्स्याद्वा । चकारादोच्च । उहसइ, ओहसइ, अवहसइ ॥

४. ३४. त्वस्य त्तणं स्यात्

तद्भावे विहितस्य । वेत्येके[35] । सिसुत्तणं, सिसुत्तं ॥

४. ३५. ताया दा

वेति निवृत्तम् । ताया दा स्यात् । पीणदा । जणदा ॥

४. ३६. क्त्वायचोस्तूणतूणमौ ।
तो द्विर्लुक् च क्वचित्

क्त्वायचोः स्थाने तूणतूणमौ स्याताम् । अनयोस्तकारस्य[36] क्वचिद् द्विर्भावश्च क्वचिल्लुक् च स्यात् । घेऊण, घेत्तूण । घेऊणं, घेत्तूणं । सोऊणं, अत्र न द्विः । हंतूण, हंतूणं ।– 'नडोर्हलि' (PS. IV. 23) इति बिन्दुस्ततो

---

29 UIO insert here सन्धा उद्धो उच्चा ( च वा in O ) वा; also G सन्धा उद्दो उद्दा वा. 30 UIO रस्सि; G om. 31 UGIO विशिष्ट.

32 UG om. 33 B निम्मालिअं; U निम्मोणिकिअं; I पिमाणिअं; O पिमाणिअं; reading adopted after GA. 34 U उदो°; IO उच्चो; G उदोदस्य.

35 BA केचेव; em. acc. to other Mss.; cf. Vr. IV, 22. 36 A तस्य.

'वर्गे तद्वर्गान्तः' (PS. IV. 24)। हन्तूणं इत्यन्त्यहल्लोपे द्वित्वम्[37]। हणिऊण इत्युक्तेऽत्र इत्वम्[38]। एवं छेत्तूण, जेत्तूण, जोत्तूण, भोत्तूण, मोत्तूण, रोत्तूण, सेत्तूण, इत्यादयः। एषां तुमादौ छेत्तुं, भेत्तुं, रोत्तुं, रोत्तव्वं इत्यादयश्च दृश्यन्ते ॥

४. ३७. इअ उआणश्च

क्त्वायचोः स्याताम्। हणिअ[39]। सुणिअ। आरंभिअ। घेउआण। सोउआण[40]। चकारात् तूणतूणमौ पूर्ववत् ॥

४. ३८. क्वचिच्च तुम्[41]।

क्त्वायचोरित्येव। काउं कृत्वा। परिरंभिउं परिरभ्य। क्वचिदिति शिष्टप्रयोगानुसारार्थम्। चकारात् इअ उआणश्च तथैव ॥

४. ३९. त्वा च दट्ठूणमित्याद्याः

तूणतूणमोस्तुकारेण सह दट्ठूणमित्याद्याः स्युः। चकारोऽयं पूर्वोक्तसमुच्चयार्थः। दृश्यादीनामर्थात्।—'दट्ठूण गआगअं च मारुअतणअं' [= दृष्ट्वा गतागतं च मारुततनयम्, R. II. 44]। 'कड्ढूण व कौलिअं' [= कृष्ट्वा वा कालियम्][42]। वड्ढूणं, चड्ढूणं[43], इत्यादि ॥

४. ४०. वन्तः स्यात् क्तवतोर्वतोः।

क्तवतोर्वतोः स्थाने वन्तः स्यात्। गअवंतो। कअवंतो ॥

---

37 This sent. which is given in B is preserved only in IO which read हंतूण हलन्त्यहपे द्वित्वम्.

38 Mss. read it as हणित्तण इत्युक्तेत्वे; A om.; B हणिऊण इत्युक्तेत्वे and puts a query mark. The reading of Mss. is definitely an error. Moreover, it seems, a portion of comm. here is lost. Mk here seems to have mentioned the ending -इऊण; cf. VI. 6 (प्रायेणात पदिवातः स्युः) and also Vr. VII. 33 by which the form हणिऊण is admissible. Em. is mine. In Oriya participle endings -उण and -इण are used. See EOLS, pp. 179–81. 39 A हसिअ. 40 UGA om.

41 Mss. and B except U read तुम्; U डम्.

42 BA कालिन्दि; em. acc. to UGIO; they also read कडुण for कड्ढूण.

43 AB give चत्तुणं; U is not clear; G चड्डुणं; IO चप्पुंणं (?). All of this being meaningless, I have emended the text as above.

४. ४१. तृडेरिरः

तच्छीलादौ विहितस्य तृडेरिरः स्यात् । भमिरो । सहिरो ।

४. ४२. आल्विल्लोल्लालवंतेंतास्तु मतोर्मताः ।

मतुप्प्रत्ययस्य स्थाने आलु इल्ल उल्ल आल वंत इंत इत्येते षट् मताः । ईसालू । गुणिल्लो । थणुल्लो । हरिसालो । पुण्णवंतो । घरिंतो[46] ॥

४. ४३. इनोर्मंतः

मतोर्मंतः स्यात् । हणुमंतो । हनुमानित्यस्यान्त्यहलो लोपे हणुमा ॥

४. ४४. इणो वा स्यात्

इण उत्तरस्य मतोर्मंतो वा स्यात् । अग्गिमंतो, अग्गिवंतो । अंसुमंतो, अंसुवंतो ॥

४. ४५. आल्वन्तादिण्णपि वा स्त्रियाम् ।

आल्वादेश उत्तर इण्णपि वा स्यात् स्त्रियाम् । ततः स्त्रियामीप्रत्ययः । लज्जालुइणी अज्जा, लज्जालू वा ॥

४. ४६. उल्लस्तस्येदमित्यर्थे

इण इति निवृत्तम् । तस्येदमित्यर्थे नाम्न उल्लः स्याद्वा । राउल्लं सेण्णं, राअईअं वा ॥

४. ४७. इल्लस्तत्र भवे भवेत् ।

वेत्येव । पुरिल्लो, पोरो वा ॥

४. ४८. स्वार्थे च ह्रश्च

स्वार्थे च उल्लोल्लौ स्याताम् । ह्रश्च स्वार्थे स्यात् । वेत्येवं । पुत्तुल्लो । पुत्तिल्लो । पुत्तह्रो । पुत्तो । एक्कोल्लो, एक्केल्लो, अत्र बाहुल्यान्न ह्रस्वः । एक्कह्रो ॥

४. ४९. दीर्घैकाद्रल्लौ

वेत्येव । स्वार्थे । दीर्घाद्रः[50] स्यात्, एकात् ल्लः स्यात् । दीहो, दीहरो ।

---

44 UGA -इरः; IO -इइ. 45 UGIO अणुल्लो; A same as B.

46 U घरिरित्तो; GI परिरित्तो ( त्तो in O ); A reads correctly.

47 BA अन्त्यहल्लोपे; em. acc. to other Mss.

48 UOI सव्वणंक्ष; G सव्वइणक्ष; A same as B. 49 UGIO वेत्येके which is definitely erroneous. 50 UGIO हृस्वः; A same as B.

अनभिधानात् द्वित्वपक्षे न स्यात्, दिग्घो। एक्को, एकल्लो ॥

**४. ५०. लस्तु पीतविद्युद्भ्याम् ।**

अन्यव्यवच्छेदार्थस्तुशब्दः। पीतविद्युद्भ्यां लः स्याद्वा। पीअं, पीअलं। विज्जू, विज्जुला, विज्जुली ॥

**४. ५१. एभ्योऽपि कः**

एभ्यः सर्वेभ्यः स्वार्थिकप्रत्ययेभ्योऽपि स्वार्थे कः स्यात्। एक्कोल्लओ। पुत्तअओ। दीहरओ। विज्जुलिआ। अपिशब्दान्नाममात्रादपि। पुत्तओ। रुक्खओ। स्वार्थ इत्युपलक्षणम्, अज्ञातादिष्वपि स्यात्। यथोक्तम्—

अज्ञाते कुत्सिते चौल्ये तथा ह्रस्वानुकम्पयोः।
उत्कर्षार्थे च संज्ञायां कप्रत्यय उदाहृतः ॥ इति।

को एसो रुक्खओ, दुराआरओ, इत्यादि ॥

**४. ५२. इअ मयटः**

सुलोपः सूत्राणां छन्दोवत्त्वात्। मयटः स्थाने इअः स्याद्वा। सुवण्णिओ, सुवण्णमओ ॥

**४. ५३. हुत्तं कृत्वोर्थ आभिमुख्ये च ।**

वेति निवृत्तम्। कृत्वःप्रत्ययार्थे आभिमुख्ये च नाम्न उत्तरे हुत्तं स्यात्। पंचहुत्तं भुंजइ।– 'घरहुत्तमणेन पहिएँण' [= गृहाभिमुखमनसा पथिकेन, GS. VII. 99 ] ॥

**४. ५४. वृन्दे दस्य द्रः स्यात्**

विंद्रं। विंद्रावणं।– 'मोरविंद्राणं' [ = मयूरवृन्दानाम्, GS. VI. 59 ] ऋष्यादीनामाकृतिगणत्वादत् इत्वम् ॥

---

51 UG स्वार्थिकेभ्योऽपि; A om. 52 B बाल्ये; em. acc. to Mss. A lacks this Kārikā. The reading of Mss. is also in accord with the rules of Pāṇini; cf. Aṣṭādhyāyī, V. iii, 73, 74, 75, 76, 85, 86, 95.

53 BIO read this passage as परहुत्तमणेण परएण; A om.; G °परपीण; U घरहुत्तमणेण परएण. Here excepting in U, the scribal confusion between घ and प evidenced elsewhere too owing to the close similarity of both the letters in Oriya is obvious. This being established, परएण is easily corrected to पहिएण. This em. is mine.

54 UG न्दस्स; IO दस्स; A न्दस्स.

४. ५५.          स्थितिपरिवृत्ती रणोः करेण्वां स्यात् ।

करेण्वां रणोः स्थितिपरिवृत्तिः स्यात् । एसा कणेरू । स्त्रीलिङ्गनिर्देशात् पुंसि न स्यात् । करेणू मत्तो ॥

४. ५६.     हरयोश्च महाराष्ट्रस्य

स्थितिपरिवृत्तिः । मरहट्टो ॥

४. ५७.          इतरथायां न वा रथयोः ।

रेफथकारयोः स्थितिपरिवृत्तिर्न वा स्यात् । इअहरा, इअरहा ॥

४. ५८.     आलाने ल्नोः

वेति निवृत्तम् । स्थितिपरिवृत्तिः स्यात् । —' आणालक्खंभेसु व ' [= आलान-स्तम्भेषु इव, R. III. 1] ॥

४. ५९.          लटयोर्ललाटे

स्थितिपरिवृत्तिः स्यात् । लडालं ॥

४. ६०.          आदेश्च णः कश्चित् ।

णडालं ॥

४. ६१.     अपतौ घरो गृहस्य

गृहस्य घरः स्यात् । घरं । अमरघरं । अपताविति किम् । गिहवई ॥

४. ६२.          स्यातां च बृहस्पतावभौ हवयोः ।

बृहस्पतौ हवयोः क्रमादभौ स्याताम् । भअप्पई ॥

४. ६३.     मलिने लिनोरिलौ वा स्यातां

मइलं, मलिणं ॥

४. ६४.          दाढादयो बहुलम् ॥

दंष्ट्रादिषु दाढादयो बहुलं बाहुलकेन भवन्ति । तत्र—

---

55 UIO °विशेषात्; AG same as B.

56 Mss. insert इति after णः which is contrary to metrical setting.

57 UIO अपघतौ ( घरो in IO ); here again the same confusion with regard to letter घ.     58 UIOA om.; G agrees with B.

क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद् विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्यं चतुर्विधं बाहुलकं वदन्ति ॥ '

तथाहि — दंष्ट्रादिषु दाढादय इत्यत्र प्रवृत्तिः । भस्मादिषु भसुम इत्यत्राप्रवृत्तिः । न हि ततः खादयः कदापि भवन्ति, तदर्थक्षारादीनां छारादय एव भवन्ति । उत्पलादौ कंदोट्टं उप्पलं इत्यादौ विकल्पः । तुङ्गतरङ्गमन्दरमन्दिरादिषु तुंगतरंगमंदरमंदिरादय एवेति क्वचिदन्यदेवेति प्राकृतविजातीयसंस्कृतमेवेत्यर्थः । केवलमेषां प्रकृत्यन्तरनिरपेक्षाणां प्रत्ययादिविकारित्वेन प्राकृतत्वम् । देश्याः शब्दास्तु पोट्टादिविकल्पसिद्धास्तेषां मूलशब्देनापि प्रयोगदर्शनात्, यथा पोट्टं उअरं चेति । दंष्ट्रायां दाढा, दुहितरि धूआ, सुभगायां सुहवी, दुर्भगायां दुहवी, स्नुषायां च सोण्हा[61], दिष्ट्या दिट्ठिआ, विप्रे विप्पलो, कपाले [ कलापे ? ] कडप्पो, अलाबुवीणायां अलावणी, भ्रूलतायां भुमआ, वैदूर्ये वेरुलिअं, दक्षिणे दाहिणं, गोदावर्यां गोला, उभयतोमुखे अवहोमुहं, स्तोकं थोकं[62], स्थविरे ठेरो[63], पुनरर्थे उण, शनैः सणिअं, मनाक् मणं, सुकुमारे सोमालं, आतोद्ये आउज्जं, मातुलानी मामी मल्लाणी, तावति तेत्तिअं, ते तव, अहं अं, यावति जेत्तिअं जेद्दहं,– ' जेत्तिअमेत्तं तीरइ ' [ = यावन्मात्रं शक्यते, GS. I. 71 ] एतावति एत्तिअं एद्दहं,— ' एद्दहमेत्तत्थणिआ ' [ = एतावन्मात्रस्तनी, KP. II, ŚL. No. 11 ], कियति केत्तिअं केद्दहं,– ' केत्तिअमेत्तं व ' [ = कियन्मात्रं वा, GS. IV. 39 ], बलीवर्दे बइल्लो, प्रावरणे पंगुरणं, स्त्रियां गवि गावी, कलापे गाई, शूर्पे चिल्लं,

---

59 B विचिन्त्य. 60 UOI इन्दोट्ट; G इंदोट्ट; A om. portion from बहुलम् up to उअरं चेति; then retains portion up to स्नुषायां सोण्हा, rest om.

61 B सोण्हा. 62 B puts '(?)' here, but this reading is confirmed by Mss.; of course थोकं is once again shown to be the Pkt. form of स्तोकं ( see afterwards ). Is it then the same word तोक्ख which is given as an ex. of Deśya at the beginning of the work ? ( cf. Intro. 3 ). In that case तोक्ख would be a derivative of स्तोक coming under दंष्ट्रादि class. Of course I have suggested the word थोक्खा there.

63 U थिरो.

तिरश्चि तिरच्छं, हठे बलामोडी, वनितायां विलआ, चर्चायां चच्चा, मातृष्वसरि माउच्छा माउस्सिआ, पितृष्वसरि पिउच्छा पिउस्सिआ, इत्यादयो नित्यम्। कंदोट्टं उप्पलं। शुक्तौ सिप्पी[६४] सुत्ती, स्तोके थोअं थोकं, पद्मे पउमं पोम्मं, छेके छेओ छइल्लो, श्वश्र्वां सस्सू अत्ता, विदर्भे विच्छोभो विअब्भो, भ्रमरो भसलो, प्रगल्भे तरट्टो पअब्भो, गाढं णिपट्टं, संबन्धी केरो—'मह मंदभाइणीए केरं' [ = मम मन्दभागिन्याः कृते, KP. III. SL. No. 14 ], अवगुण्ठणं ओढणं, णिज्झरो ओज्झरो, बहिर्भूते बहिरं बाहिरं, जुअली संघाडी, इत्यादौ विकल्पः। भस्मादयस्तु भस्म-ग्लौ-स्मर-सभ्रू-कष्ट-विष्टरश्रवस्-उष्माश्राश्लेष-द्वन्द्व-बहिरोजःप्रभृतयः। नैते सर्वथा[६६] स्वयं व्युत्पाद्य प्रयोज्याः। किं तु तदर्थक्षारचन्द्रमदनादय एव प्रयोज्याः॥

इति श्रीमार्कण्डेयकवीन्द्रकृतौ प्राकृतसर्वस्वे भाषाविवेचने महाराष्ट्र्यां संकीर्णविधिश्चतुर्थः पादः॥ ४॥

---

64 UGIO सिप्पा. In Oriya सिप is used.

65 Em. is mine. B and Mss. read the passage as 'भूविष्टे स्मर सारवष्मौश्राश्लेषद्वन्द्वोस्द्र:; U भ्र in G; B puts '(?)' after the end of the passage. My reconstruction of the text makes the whole thing clear; Cf. Hc. II. 174.     66 B सर्वथा; em. acc. to Mss.

The last two lines have a close affinity with a similar statement of Hc. The lines of Hc. refer to Sū. II, 174 :—

पूर्वैः कविभिरप्रयुक्तानां प्रतीतिवैषम्यकरः प्रयोगो न कर्तव्यः। शब्दान्तरैरेव तु तदर्थोऽभिधेयः॥

## पञ्चमः पादः ।

५. १. सावत ओत्स्यात्

सौ प्रथमैकवचने । 'इदुतोः' (PS. V. 17) इति पर्यन्तमत इत्यनुवर्तते । रुक्खो । अन्त्यहल्त्वात्सुलुक् । जसो । कम्मो ॥

५. २. एतदि वा

एतदि शब्दे स्थितस्यात ओत्स्याद्वा सौ परे । एस जणो । एसो रुक्खो ॥

५. ३. लोपो जश्शसोः

वेति निवृत्तम्, एतदिति च । अतः संबन्धिनोर्जश्शसोर्लोपः स्यात् । रुक्खा सोहंति । रुक्खे पेच्छ ॥

५. ४. अमोऽतश्च ।

अत इत्येव । अतः संबन्धिनोऽमोऽतो लोपः स्यात् । रुक्खं ॥

५. ५. टामोर्णं

अतष्टामोर्णं स्यात् । रुक्खेणं । रुक्खाणं ॥

५. ६. भिस् हिं

अतो भिस् हिं स्यात् । रुक्खेहिं ॥

५. ७. ङसिरादोदुहयः

आ दो दु हि इति चतुर्धा ङसिः स्यात् । रुक्खा, रुक्खाओ, रुक्खाउ, रुक्खाहि । दकरणं भाषान्तरार्थम् ॥

५. ८. भ्यसो हिंतो ।
सुंतो च

अतो भ्यसो हिंतो सुंतो च स्यात् । रुक्खेहिंतो, रुक्खेसुंतो ॥

५. ९. ङसः स्सः

अतो ङसः स्सः स्यात् । रुक्खस्स ॥

५. १०. ङेरेम्मी स्याताम्

अत इत्येव । रुक्खे, रुक्खम्मि । संधावप्येत्वे प्राप्ते एत्वविधानमेकपदे स्वरसंधिनिषेधं ज्ञापयति । तेन बालाइ, नईइ ॥

५. ११. सुपः सुं स्यात् ।

रुक्खेसुं ॥

५. १२. दीर्घो जस्ङस्याम्सु

एष्वतो दीर्घः स्यात् । रुक्खा सोहंति[1] । रुक्खाओ, रुक्खाउ, रुक्खा । रुक्खाहि । रुक्खाणं ॥

५. १३. भ्यसि वा

भ्यसि परेऽतो दीर्घो वा स्यात् । रुक्खाहिंतो, रुक्खेहिंतो, रुक्खासुंतो, रुक्खेसुंतो ॥

५. १४. ङिङसौ विना सुप्येत् ॥ ५९ ॥

सुपीति प्रत्याहारसत्त्वम् । सुपि परे अत एत् स्यात् । दीर्घस्य विशेषविधित्वात् तदतिरिक्तोऽस्य विषयः । शसि रुक्खे । रुक्खेणं । रुक्खेहिं । रुक्खेसुंतो, रुक्खेहिंतो । रुक्खेसुं । ङिङसोस्तु रुक्खम्मि, रुक्खस्स ॥

५. १५. नैतावनामि कतिपञ्चाद्योः

कत्यादेः पञ्चादेश्चानामि सुपि परे एतौ दीर्घ एच न स्याताम् । जश्शसोर्लोपस्तु भवत्येव । कइ । जइ । तइ[2] । पंच होंति । पंच पेच्छ । सत्तहिंतो । अट्ठसुंतो । णवसुं । दहसुं । एआरह । वारह । तेरह । चउद्दह । पण्णरह । सोलह । सत्तरह । अट्ठारह । आमि तु पंचाणं, सत्ताणं । छएहिं, पंचाहिं, अच्छराहिं, अट्ठासुं, इत्थीसुं इत्यादि वक्ष्यमाणविशेषविधेः ॥

५. १६. अस्य क्वचिल्लोपः ।

स्यात् । रुक्खा पडिअं । ङौ रुक्खे । राही, ह्रस्वोक्त्या दीर्घस्याप्युपलक्षणादीप्रत्यये आलोपः ॥

५. १७. इदुतोः शस् णो

इदुतोः संबन्धि शस् णो स्यात् । स्त्रीक्लीबयोर्वक्ष्यमाणत्वात् पुंस्येव । अग्गिणो[3] । वाउणो ॥

५. १८. दीर्घौ ह्रस्वौ स्याताम्

मण्डूकप्लुतिन्यायात् सुपि परे पुंसि च । गामणिणो । सअंभुणो । गामणिस्स । सअंभुस्स ॥

---

1 UGIO रोहन्ति; A होन्ति. 2 Mss. om.

3 B अग्गो, तग्गो contrary to the reading of Mss.

4 UG दीर्घे०; A lacks this Sū. entirely.

५. १९. ङसो वा स्यात् ॥ ६० ॥

इदुतोः ङसो णो वा स्यात् । अग्गिणो सिहा । वाउणो वेओ । रिउणो । गामणिणो, गामणिस्स । सअंभुणो, सअंभुस्स ॥

५. २०. जस ओ वो अच प्राक्

इदुतोर्जस ओ वो इत्येतौ स्याताम् । प्राक् पूर्वमच्च स्यात् । अग्गओ, अग्गवो । वाअओ, वाअवो । चकारात् णो च । अग्गिणो । वाउणो ॥

५. २१. टा णा

इदुतोष्टा णा स्यात् । स्त्रियां विशेषस्य वक्ष्यमाणत्वात् पुंक्लीबयोः । अग्गिणा । वाउणा । गामणिणा । सअंभुणा । दहिणा । महुणा ॥

५. २२. दीर्घः सुभिस्सुप्सु ।

एषु परेष्विदुतोर्दीर्घः स्यात् ।[5] अग्गी । वाऊ । अॅग्गीहिं । वाऊहिं । अग्गीसुं । वाऊसुं । णईहिं । मईहिं । तणू । तणूहिं । दहीहिं । महूसुं । ईदूतोरप्येवं रूपम् ॥

५. २३. न स्यात् क्वचित्

कइसुं । भूमिसुं । क्लीबे सौ दीर्घो न स्यादेव । दहिं । महुं ॥

५. २४. स्त्रियां शसुदोतौ

स्याताम् । स्त्रियामिति 'सोर्नपुंसके' ( PS. V. 31 ) इति यावत् । मालाउ, मालाओ । णईउ, णईओ ॥

५. २५. इदुतोश्च दीर्घः स्यात् ॥ ६१ ॥

सुपि परे । शस उदोतौ च । मईउ, मईओ । तणूउ, तणूओ । मईए । तणूए ॥

५. २६. जस् वा

जस् उदोतौ वा स्यात् । बालाउ, बालाओ । णईउ, णईओ । मईउ, मईओ । तणूउ, तणूओ । पक्षे बाला, णई, मई, तणू ॥

५. २७. अमि ह्रस्वः

अमि दीर्घो ह्रस्वः स्यात् । बालं । णइं । वहुं ॥

---

5 UIO आग्गीहिं.

५. २८. टाँङसिङस्ङीनामिदेददातः स्युः ।
णईइ । णईए । णईअ । णईआ । मईइ । मईए । मईअ । मईआ ॥

५. २९. नातोऽदातौ
अतष्टादीनामदातौ न स्याताम् । बालाइ । बालाए ॥

५. ३०. आदीतौ बहुलं
स्त्रियां नाम्न उत्तरे आदीतौ बहुलं स्याताम् । सोहणा, सोहणी । सुप्पणहा, सुप्पणही । राहा, राही । कचिदादेव । पिआ । वल्लहा । असहणा । अहणा । माणिणी । माणंसिणी । हलैन्तादीदेवेति शाकल्यः ॥

५. ३१. सोर्नपुंसके बिन्दुः ॥ ६२ ॥
स्यात् । वणं । दहिं । महुं । अमोऽल्लोपेऽपि दहिं, महुं । दहि महु इति तु संस्कृतसिद्धात् ॥

५. ३२. जश्शसोरिं प्राक् च दीर्घः स्यात्
नपुंसके जश्शसोरिं स्यात्, प्राक् च दीर्घः स्यात् । वणाइं । दहीइं । अच्छीइं । महूइं ॥

५. ३३. अक्ष्णोऽच्छीणि च कचित् ।
दृश्यत इति शेषः । यथा वाक्पतिराजस्य—

‘ उअ कण्णणिहिअकुसुमावअंसरअणंकुराइं व गलंति ।
विडकामिणीण बहुसो संभरिए जम्मि अच्छीणि ॥ ’
[ = पश्य कर्णनिहितकुसुमावतंसरत्नाङ्कुरा इव गलन्ति ।
विटकामिनीनां बहुशः संस्मृते यस्मिन् अक्षीणि ॥ ]

सप्तशतके च—

‘ अच्छीणि ता थइस्सं दोहि वि हत्थेहि तम्मि दिट्ठम्मि ।
अंगं कलंबकुसुमं व पुलइअं कहं णु ढकिस्सं ॥ ’
[ =अक्षीणि तदा स्थगयिष्ये द्वाभ्यामपि हस्ताभ्यां तस्मिन् दृष्टे ।
अङ्गं कदम्बकुसुममिव पुलकितं कथं नु छादयिष्ये ॥
[ GS. IV. 14 ] ॥

---

6 IOG श्र – a confusion comparable to शक्ती in case of शक्ति.

7 Mss. om. 8 UIO -पिहु( -हु in G )राई ; A om. the entire portion from यथा॰. 9 UI एकम्मि ; O कम्मि ; G कंसि .

**५. ३४. संबुद्धौ सावोत्वदीर्घबिन्दवो न स्युः**

हे रुक्ख । हे अग्गि । हे वाउ । हे वण ।

संबुद्धावोत्वमिच्छन्ति वाऽदन्तस्य तु[10] पैङ्गलाः ।

णिक्किवो, णिक्किव ॥

**५. ३५. आत एत् ॥ ६३ ॥**

नेति निवृत्तम् । संबुद्धौ सौ परे आत एत्स्यात् । बाले । माले ॥

**५. ३६. न स्यात् क्वचित्**

हे माउच्छा । हे पिउच्छा । हे अत्ता ॥

**५. ३७. ईदूदम्बानां ह्रस्वः**

संबुद्धौ सौ परे एषां ह्रस्वः स्यात् । हे णइ । हे वहु । हे अंब ॥

**५. ३८. सुपि ऋदारः ।**

सुपि परे ऋकार आरः स्यात् । ततोऽदन्तवद्रूपम् । भत्तारो, भत्तारा, भत्तारं, भत्तारे, भत्तारेण, भत्तारेहिं, इत्यादि । संबुद्धौ— हे भत्तार, हे भत्तारा ॥

**५. ३९. पित्रादेररः**

सुपि परे पित्रादेर्ऋकारः अरः स्यात्[11] । ततोऽदन्तवद्रूपम् । पिअरो, पिअरा । भाअरो, भाअरा[12], जामाअरो, जामाअरा । माअरा, बालावद्रूपम् ॥

**५. ४०. उद्वा जश्शस्टाङस्ङसिष्वमातुः स्यात् ॥ ६४ ॥**

एषु मातृशब्दवर्जमृकार उद्वा स्यात् । भत्तुणो । भत्तओ, भत्तवो । भत्तू । एवं पिउणो, पिअओ, पिअवो, पिऊ । पक्षे भत्तारा, पिअरा । शसादावुदन्तवदुदाहार्यम् । मातुस्तु— माआ, माआओ । माअरा, माअराओ ॥

**५. ४१. आत्सौ**

सौ परे ऋत आद्वा स्यात् । भत्ता, भत्तारो । पिआ, पिअरो । संबुद्धौ— हे भत्ता, हे भत्तार । हे पिआ, हे पिअर ॥

---

10 Mss. excepting A read बंअदो in place of वादन्तस्य तु.

11 UGIO om. portion from भत्तारो (Sū. 38) up to this evidently on account of confusion arising out of the two similar sentences : ततो ... रूपम् in both Sūs. 12 Mss. om. भाअरा, जामाअरो, माअरा.

५. ४२.   सुपि मात्रादेः

सुपि मात्रादेर्ऋत आदा स्यात् । माआ, माआओ । टाङसिङस्ङिषु माआए इत्यादि । हे माए, हे माअरे । सुपीति सुमात्रानुवृत्तिनिरासार्थम् ॥

५. ४३.   ननान्दृयात्रोस्तु नित्यं स्यात् ।

ऋदादासुपीत्येव । टाङसिङस्ङिषु । णणंदाए । जाआए । हे णणंदे । हे जाए ।

५. ४४.   सौ राज्ञोऽतश्च तथा

तथा अत आत्स्यात् । राआ ॥

५. ४५.   णो जश्शस्ङसिङसां तु स्यात् ॥ ६५ ॥

राज्ञ एषां चतुर्णां णो स्यात् । राइणो होंति पेच्छ वा । राइणो गहिअं धणं वा ॥

५. ४६. टा णा द्विर्वा जस्य च लोपः स्यात्

राज्ञ इत्येव । द्वित्वपक्षे जस्य च लोपः स्यात् । रण्णा, राइणा[15] ॥

५. ४७.   णोरपीत्थमिच्छन्ति ।

इत्थमिति णो द्विर्वा जलोपश्चेति । रण्णो, राइणो ॥

५. ४८.   [17]अद्वित्व इत्

द्वित्वाभावपक्षे जस्य इत्स्यात् । राइणा । राइणो ।

५. ४९.   जश्शसोर्णोविधावाच्च

जश्शसोर्णोविधौ सति राज्ञो जस्य आत्स्यात् । अद्वित्व इत्येव । राआणो होंति पेच्छ वा । चकारादिच्च । राइणो[16] ॥

५. ५०.   अप्यदन्तता ॥ ६६ ॥

राज्ञोऽन्त्यहल्लोपे अदन्ततापि स्यादेव । राओ, राआ । राअं । राए, राएण । राएहिं । राआ । राआओ । राआउ । राआहि । राआहिंतो, राआसुंतो । राअस्स । राआणं । राए, राअम्मि । राएसुं । हे राअ, हे राआ ॥

५. ५१.   संबुद्धौ सोस्तु बिन्दुर्वा

स्यात् । हे राअं, हे राआ ॥

५. ५२.   भवद्भगवतोः सदा ।

अनयोः सोर्बिन्दुः स्यात् । सदेति संबुद्धावसंबुद्धौ च नित्यमेव । भवं भणउ । भअवं । हे भवं । हे भअवं ॥

---

13 UGIO सुमात्रानु०.   14 IO ननान्ध०.   15 UIO रोण्णे.
16 UGIO राइण.   17 IO om. Sūs 48 and 49.

५. ५३. **आत्मादीनामाणः**

अत आणः स्यात् ।

आत्मब्रह्मोक्षपूषाध्वमूर्धग्रावयुवादयः ॥

अप्पाणो । मलोपे अत्ताणो । बम्हाणो । उक्खाणो । छत्वे उच्छाणो । पूसाणो । अद्धाणो । मुद्धाणो । गावाणो । जुआणो । वृक्षवद्रूपम् । सर्वसुप्-साधारणोऽयं विधिः ।— 'अप्पाणं उल्लंघइ भर्णसु' ॥ [ = आत्मानम् उल्लं-घते, भण ॥ ]

५. ५४. **अनित्वद्वित्वं च राजवत्सर्वम् ॥ ६७ ॥**

आत्मादीनामित्वद्वित्ववर्जं सर्वं कार्यं राजन्-शब्दवदतिदिश्यते । आणादेश-समुच्चयार्थश्चकारः । अत्ता, अप्पा । अप्पाणो, अत्ताणो । अप्पं । अप्पाणो, अप्पे । अप्पणा । अप्पेहिं । अप्पणो । अप्पाहिंतो, अप्पासुंतो । अप्पणो । अप्पाणं । अप्पे । अप्पेसुं । हे अप्पा, हे अप्पं, हे अप्प । ब्रह्मादयोऽप्येव-मुदाहार्याः ॥

५. ५५. **सर्वनाम्नो जसः पुंस्येत्**

स्यात् । सर्वनाम्न इत्यधिकारः । सव्वे । विस्से ॥

५. ५६. **ङेः स्सिम्मित्थाः स्युरस्त्रियाम् ।**

सव्वस्सिं, सव्वम्मि, सव्वत्थ । स्त्रियां तु सव्वाए एव ॥

५. ५७. **किंयत्तदेतदिमां ट इणा वा**

अस्त्रियामेषां टाया इणा वा स्यात् । किणा । जिणा । तिणा । एइणा । इमिणा । पक्षे केण, जेण, इत्यादि ॥

५. ५८. **आम एसिं स्यात् ॥ ६८ ॥**

स्त्रियामाम एसिं स्याद्वा । केसिं । जेसिं । तेसिं । एएसिं । इमेसिं । पक्षे काणं जाणं[19] इत्यादि ॥

---

18 B अप्पाणुलंघइं भणसु and puts '(?)' at the end of the passage; UI अपा( 'प्पा in G )सुलंघइ भणसु; A om.; O अपाम्रुलंघत्०; comparing these I have emended it as above. This seems to be a citation from a dramatic work.

19 UIO जणं; G writes correctly as BA.

५. ५९　**कियत्तद्भ्यो ङस आसः स्यात्**

वेत्येव । अस्त्रियामित्येव । कास, कस्स । जास, जस्स । तास, तस्स ॥

५. ६०.　**ईप्रत्यये स्सा से ।**

ईप्रत्यये सति एभ्य उत्तरस्य ङसः स्सा से इत्युभौ स्याताम् । युक्ते ह्रस्वः । किस्सा, कीसे । जिस्सा, जीसे । तिस्सा, तीसे । पक्षे इदेददातः । कीइ, कीए, कीअ, कीआ । ईप्रत्यय इति किम् । काए । जाए । ताए ॥

५. ६१.　**त्रिषु ङेर्हिं प्राक् पुंवच्च**

त्रिभ्येभ्यो ङेर्हिं स्यात् । स्त्रियां प्राक् पुंवच्च । कहिं रुक्खे वणे णईए वा । पक्षे कस्सिं, कीए । जहिं । तहिं । जस्सिं । जीए ॥

५. ६२.　**आला आहे इआँ दार्थे ॥ ६९ ॥**

कालार्थे विहितदाप्रत्ययस्यार्थे एभ्यो ङेरेते त्रय आदेशाः स्युः । काला, काहे, कइआ । जाला, जाहे, जइआ । ताला, ताहे, तइआ ॥

५. ६३.　**सर्वैकान्येभ्यश्च ङसेर्दो त्तो प्राङ् न दीर्घश्च ।**

सर्वैकान्येभ्यः कियत्तद्भ्यश्च ङसेर्दो त्तो वा स्याताम् । प्राग् दीर्घश्च न स्यात् । सव्वदो, सव्वत्तो । एक्कदो, एक्कत्तो । अण्णदो, अण्णत्तो । कदो, कत्तो । जदो, जत्तो । तदो, तत्तो । पक्षे आदोदुहयः । ङसेरिति पञ्चम्युपलक्षणम्, तेन भ्यसोऽपि दोत्तोप्रभृतय इत्येके ॥

५. ६४.　**इदमो दस्य च लुक् स्यादो च**

त्रिषु इदमो ङसेर्दो त्तो स्याताम्[21], इदमो दस्य च लुक् स्यात् । ङसेरो च स्यात्, इदमो दलुक् च । इदो, इत्तो, इओ । दलोपे इओ इति सिद्धौ ओविधानादन्यत्र दोत्वे दलोपो न स्यात् । तेन सव्वदो, अण्णदो इत्याद्येव । न तु सव्वओ अण्णओ इत्यादि ॥

५. ६५.　**तदस्तो[22] च सह**

त्रिषु तदो ङसेरो च स्यात् । ङसिना सह तो च स्यात् । तओ,—‘तओ

---

20 UI आला एहिआ; O हिआ; G कहिआ; A same as B.

21 The portion from सव्वदो of the previous Sū. up to this is lacking in Mss. probably due to the oversight of the scribe. A preserves only a part of it.　　22 IO तदस्तो सह.

समुच्छसिअहासैसुंदेरं' [= ततः समुच्छ्वसितहाससौन्दर्यम्] इति गुण-पताकौं। तो,— 'तो ते कइमाअंगे' [= ततस्तान् कपिमातङ्गान्, R. III. 1] इति सेतुः॥

५. ६६. ङसा से स्यात्॥ ७०॥

त्रिषु ङसा सह तदः से स्यात्। से, तस्य तस्या वा। वानुवृत्तेः तास, तस्स, तासे, तिस्सा, ताए॥

५. ६७. आमा णं सिं स्याताम्

आमा सह तदस्त्रिषु णं सिं वा स्याताम्। णं, सिं, तेषां तासां। पक्षे तेणं, ताणं, तीणं वा॥

५. ६८. अमृटामिसि णः

एषु परेषु त्रिषु तदो णः स्याद्वा। णं भण, तं भण, तां भण, तद्भण वा। णेणं। णाए। णेहिं। णाहिं। पक्षे तं, तेण ताए, तेहिं, ताहिं॥

५. ६९. किमः कः स्यात्।

वेति निवृत्तम्। त्रिषु सुपि। को रुक्खो। कं वणं। का णारी।— 'किं सीसउ जं ठवेइ वअपरिणामो' [= किं शिष्यतां यत् स्थापयति वयः-परिणामः, R. IV. 23] इत्यादावव्ययस्य किमः प्रयोगः॥

५. ७०. इदम इमः स्यात्

त्रिषु सुपि। इमो। इमा। इमं। अअं, इअं, इति संस्कृतात्॥

५. ७१. अः स्सिंस्सयोर्न वा

स्सिंस्सयोरिदमोऽकारः स्यान्न वा। अस्सिं, इमस्सिं। अस्स, इमस्स॥

५. ७२. दस्य हो ङिना

ङिना सह इदमो दस्य हः स्यात्। इह, इमस्सिं॥

५. ७३. न त्थः॥ ७१॥

इदमो ङेः स्थाने त्थो न स्यात्। इह, इमस्सिं, अस्सिं, इमम्मि॥

---

23 I तओ मस्सासि ताहा सुन्दरं; O तओ॥ मस्सासि सुंदरं; U तओ मस्सासि अहा सुन्दरं; G तए मस्स्यासि ताहा सुन्दरं.

24 UI गुणपताका; A om. the quotations entirely.

25 U कं पठेवइ; IO कं पठवेइ; G कं पठवेइ; A om. the entire quotation.

५. ७४. क्लीबे सम्म्यामिदमिणमिणमों

इदम एते त्रयः स्युः । इदं, इणं, इणमों । वानुवृत्तेः—इमं वणं ॥

५. ७५. सममेणमेतदोम्टाभ्याम् ।

अम्टाभ्यां सममेतद एणं स्यात् क्लीबे । एणं पेच्छ । एणं कअं । एइणा, एएण वा ॥

५. ७६. त्तो पञ्चम्याः

एतदः पञ्चम्याः स्थाने त्तो स्याद्वा । एत्तो, एतस्मात् एताभ्यां एतेभ्यः । पक्षे प्रागुक्तकार्याणि ॥

५. ७७. तलुक् त्तोत्थे

त्तोत्थयोरेतदस्तस्य लुक् स्यात् । एत्तो, एत्थ ॥

५. ७८. सावक्लीबे तदश्च सः ॥ ७२ ॥

अक्लीबे सौ परे तद एतदश्च तस्य सः स्यात् । सो जणो । सा रिद्धी । एसो । एसा । क्लीबे तु तं, एणं ॥

५. ७९. अदसो मुः

त्रिषु सुपि परे अदसो मुः स्यात् । अमू पुरिसो । अमू वहू । अमुं वणं । उदन्तवद्रूपाणि । अमुस्सिं, अमुत्थ ॥

५. ८०. सुना वा ह

सुना सह अदसो हः स्याद्वा । अह पुरिसो णारी वणं वा ॥

५. ८१. युष्मदस्तुं तुमं तथा ।

तथेति त्रिषु सुना सह युष्मदः स्थाने तुं, तुमं च स्याताम् । युष्मद इत्यधिकारः । तुं, तुमं ॥

५. ८२. तं चामा स्यात्

अमा सह युष्मदस्तं स्यात । चकारात्तुंतुमौ च । तं, तुं, तुमं वा, त्वाम् ॥

५. ८३. तुज्झे तुम्हे तु जसा

जसा सह युष्मदस्तुज्झे तुम्हे स्याताम् । तुज्झे, तुम्हे ॥

५. ८४. शसा वो च ॥ ७३ ॥

शसा सह युष्मदो वो स्यात् । चकारात्तुम्हे तुज्झे च । वो युष्मान् ॥

---

26 With exception of A.G, Mss. generally read म्ह for म्ह in these pages.

**५. ८५. टाङिभ्यां तइ तुमए तए तुमे तुमइ**

एते पञ्च स्युः। त्वया त्वयि वा॥

**५. ८६. टा तुमाइ भवेत्।**

टेति सहार्थे तृतीया। अस्य विशेषादिष्टत्वात् तइ इत्यादि पञ्चकं च॥

**५. ८७. तुज्झेहिं तुम्हेहिं भिसा तु**

भिसा सह स्याताम्॥

**५. ८८. ङसिना तुमा तुमादो च॥ ७४॥**

**तत्तो तुमादु च तुमाहि तइत्तो चेति षट् प्रोक्ताः।**

ङसिना सह॥

**५. ८९. भ्यसि तुज्झ तुम्ह[27] तुम इति**

भ्यसि परे युष्मदः स्थाने तुज्झ तुम्ह तुम इति त्रयः स्युः॥ पदादेशशङ्का-निरासाय पद्य एव विवृणोति—

**५. ९०. एषां रूपाण्यदन्तवत्[28] स्युः॥ ७५॥**

एषां त्रयाणामादेशानाम्। भ्यसो हिंतो सुंतो आदेशौ अतश्चादंतौ स्याता-मित्यर्थः। एवं त्रयाणां प्रत्येकं चत्वारि चत्वारि रूपाणि भवन्ति। तुज्झाहिंतो, तुज्झेहिंतो, तुज्झासुंतो, तुज्झेसुंतो। तुम्हतुमयोरप्येवम्।— 'कुविअं च पसा-एउं सिक्खइ लोओ[29] तुमाहिंतो' [= कुपितं च प्रसादयितुं शिक्षते लोकः युष्मत्, GS. VI. 23] इति सप्तशती। तुम्हादेशमप्यत्र[30] कश्चिदिच्छति। तदन्ये न मन्यन्ते॥

**५. ९१. तुह तुज्झ तुम्ह तुब्भ तु तव तुम च ङसा**

ङसा सह इमे सप्त स्युः॥

**५. ९२. टया च ते दे स्तः।**

चकारात् ङसा सह। ते, दे, त्वया तव वा॥

---

27 BA तुम्ह तुज्झ°. 28 B inserts च here which goes counter to metrical setting and the reading of Mss.

29 B सिक्खाउह्लो; UIOG सिक्खउ लोए. Both readings are corrupt though Mss. are nearer to the correct reading; em. according to Weber's edition of GS.

30 B तुब्भादेशम्; U तु ओहा (?)°; G तुम्हा°; IO चतुरा°. It probably refers to He's rule III, 98 as has been rightly conjectured by Nitti (See *Les Gram.* p. 103, footnote 2.). Em. is mine.

५. ९३.　**तुज्झाणं तुम्हाणं वो तुम्हैामा**
आमा सह एते चत्वारः स्युः ॥

५. ९४.　**ङिना तुमम्मि न वा ॥ ७६ ॥**
ङिना सह तुमम्मि न वा स्यात्। तुमम्मि। पक्षे तइप्रभृतयः ॥

५. ९५.　**तुज्झतुम्हौ सुपि स्याताम्**
सुपि परे। अत एत्वम्। तुज्झेसुं, तुम्हेसुं ॥

५. ९६.　**शाकल्यस्यात इन्मते।**
शाकल्यस्य मते अनयोरत एत्वप्राप्तौ इत्स्यात्। तुज्झिसुं, तुम्हिसुं। एतत्तु न बहुसंमतम् ॥

५. ९७.　**सुनास्मदोऽहं अहअं अहम्मि अहमित्यमी ॥ ७७ ॥**
अस्मद इत्यधिकारः। सुना सह अमी चत्वारः स्युः ॥

५. ९८.　**अम्मिरमा च**
अमा सह अस्मदोऽम्मिः स्यात्। चकारात् सुना च। अम्मि, अहं मां वा ॥

५. ९९.　**मि चैके**
स्वम्भ्यां सह मि च स्यात् इत्येके। मि, अहं मां वा ॥

५. १००.　**ममं मं**
सुनेति निवृत्तम्। अमा सह ममं मं इत्येतौ स्याताम्। ममं, मं, माम् ॥

५. १०१.　**अम्हे जसा**
सह स्यात् ॥

५. १०२.　**शसा णे च।**
चकारादम्हे च। णे, अम्हे, अस्मान् ॥

५. १०३.　**टा मे ममाइ**
टया सह मे ममाइ स्याताम् ॥

५. १०४.　**टाङिभ्यां समं मइ मए उभौ ॥ ७८ ॥**
स्याताम्। उभाविति क्रमशङ्कानिरासार्थम्। मइ, मए, मया मयि वा[32] ॥

५. १०५.　**भिसा णे अम्ह अम्हाणं अम्हे अम्हेहिमित्यमी।**
पञ्च स्युः ॥

---

31 U -सम्ममा ; IO -तंवामा ; G -ममामा ; A same as B.

32 The portion from अम्हे जसा ( Sū. 101 ) up to this is lacking in UGIO.

**५. १०६. ङसिना ममाइ मत्तो ममाहि ममादो मइत्तो स्युः ॥ ७९ ॥**
ङसिना सह पञ्च । अत्र द्वितीयपादे एका मात्रा वर्धत इति न वाच्यम् ।– 'जइ दीहो वि अ वण्णो लहु जीहा पढइ होइ सो वि लहू ।' [= यदि दीर्घमपि च वर्णं लघु जिह्वा पठति भवति सोऽपि लघुः, PPL. I. 8] इति श्रीमत्पिङ्गलपादैर्दीर्घस्य लघुत्वातिदेशात् ॥

**५. १०७. भ्यस्यम्हममौ स्याताम्**
भ्यसि परे अस्मदो अम्ह मम इत्येतौ स्याताम् । हिंतो सुंतो द्वावादेशौ च पूर्ववत् । अम्हाहिंतो, अम्हासुंतो, अम्हेहिंतो, अम्हेसुंतो । ममाहिंतो, ममासुंतो, ममेहिंतो, ममेसुंतो ।–

'को क्खु अवराहिल्लो च्चिअ कुप्पइ अण्णो तुमेहिंतो ।
ओरद्धं पि पसाअइ का वा अण्णा ममाहिंतो[33] ॥'
[= कः खलु अपराधवान् एव कुप्यति अन्यः युष्मत् ।
अपराद्धमपि प्रसादयति का वा अन्या अस्मत् ॥ ]
इति वाक्पतिराजः ॥

**५. १०८. अम्हत्तोऽम्हेहिमित्येके ।**
पदादेशोऽयम् ॥

**५. १०९. मम मे मइ मज्झ ङसा**
ङसा सह चत्वारः स्युः ॥

**५. ११०. आमा णेअम्हाणमम्हमम्होम्हाः ॥ ८० ॥**
आमा सह एते पञ्च स्युः ॥

**५. १११. ङिना ममंसि ममम्मि स्याताम्**

**५. ११२. अम्हेसु मम्हिसुं ।**

---

33 This untraced verse is preserved only in parts in UGIO in the following manner. A om. it and B preserves it completely. U–को क्खु अवराहितो चिअ कुप्पइ अण्णो उमेहिंतो । ओरद्धं पि पसा । G–को क्खु अवराहिणो चिअ कुप्पइ अण्णो उमेहिंतो । पदिदपिसुपि; I–को क्खु अवराहितो अवि कुप्पइ अण्णो उमेहितो, ओरद्धं पि पसा; O same as I differing only in कुप्पइ as कुप्पइ. 34 The portion from ओरद्धं पि (Sū. 107) up to this lacking in UGIO; A om. Sū. 108 only.

अस्मासुं स्युः सुपा

त्रय एव। अत्र केषांचित्पदानां संस्कृतात्सिद्धिं प्राचीमतुरोधात् व्याख्याने ग्रन्थविस्तरभयाच्च उपेक्ष्य सूत्राणि कृतानि ॥

५. ११३. स्वादौ द्वेर्दोः

त्रिष्वित्येव। स्वादौ परे द्वेर्दोः स्यात्। दोहिं। दोहिंतो, दोसुंतो। दोण्णं। दोसुं। जश्शसोर्वक्ष्यते ॥

५. ११४. त्रेस्ती[36]

त्रिषु स्यात्। तीहिं, तीहिंतो, तीसुंतो। तिण्णं। तीसुं। दीर्घनिर्देशात् भिसभ्यसा- म्सुप्सुं[37] कदाचिद् गुणो[38] मा भूत्। जश्शसोर्वक्ष्यते ॥

५. ११५. सजश्शसः ॥ ८१ ॥

तिण्णि स्यात्

त्रिषु त्रेर्जश्शास्सहितस्य तिण्णि स्यात्। तिण्णि विप्पा बालाओ भूसणाइं वा ॥

५. ११६. द्वेस्तु दोदोण्णिदुवेबेवेण्णयस्तथा।

तथेति जश्शस्भ्यां सहितस्य द्वेरिमे पञ्च स्युः। दो, दोण्णि, दुवे, बे, बेण्णि, सोहंति पेच्छ वा ॥

५. ११७. पदे परे दुः समासे

समासे पदे परे द्वेर्दुः स्यात्। दुगुणो, दुवेओ ॥

५. ११८. क्वचिदोच्च दृश्यते ॥ ८२ ॥

'णडालफलअं दोहंडचंदुज्जलं'[39] [= ललाटफलकं द्विखण्डचन्द्रोज्ज्वलम्, KM I. 32] इति राजशेखरः ॥

५. ११९. चतुरश्चत्तारो चत्तारा चत्तारि चत्तारे।

जश्शस इत्येव। चत्वार आदेशाः ॥

---

35 UGIO प्राग्  36 UIO त्रिषु; G तेभ्यः; A same as B.

37 B सुभ्यसाम्सुप्सु; UI सभ्यसुं सुप्सु; G सभ्यसुसु; A om.; em. is mine. 38 B puts '(?)' here. But this is correctly in agreement with the Mss.

39 This citation from KM is lacking in UGIO only, though 'इति राजशेखरः' is there. BA read दोहिण्ण in place of दोहंड which should be the correct reading; cf. Rt. I. 6. 22. In Dr. Ghosh's edition the reading is दोखंड for दोहंड, though the latter is preserved in his best Mss.

५. १२०. अन्यत्र तु चदुः

जश्शसोरन्यत्र पुनः चतुरश्चदुः स्यात्। चऊहि। चऊहिंतो। दकारो भाषान्तरार्थः ॥

५. १२१. एषामामो ण्णं

एषां द्वित्रिचतुराम्। दोण्णं। तिण्णं। चउण्णं। द्वित्वनिर्देशोऽत्र पादे शेषादेशयोर्द्वित्वनिषेधज्ञापकः। रुंक्खेणं रुक्खाणं[40] ॥

५. १२२. अदन्तवच्छेषः ॥ ८३ ॥

शेषः सुब्विधिरदन्तवत्। अग्गीहिं। दोहिं। णईहिंतो[41]। अग्गिस्स। वाउम्मि इत्यादि ॥

५. १२३. न ङिङस्योरेदातौ

अदन्तत्वातिदेशात् प्राप्तावनदन्तान्न स्याताम्। अग्गिम्मि। वाउम्मि। अग्गिदो। वाउदो। सावोत्वं भिस्सुपोरेत्वं च विशेषविधिना दीर्घेणैव व्याहतम् ॥

५. १२४. पञ्चादेर्भिस्सुपोः स्त्रियामाद्वा।

भिस्सुपोः परयोः पञ्चादेरत आद्वा स्यात् स्त्रियाम्। पंचहिं, पंचाहिं। पंचसुं, पंचासु। तरुणीसुं इत्यादि ॥

५. १२५. षष् छअ

स्यात्। छअ। छआ। छएहिं। छआणं ॥

५. १२६. भिस्यत ऍत्[43]

विभक्तिविपरिणामेन षष इति षष्ठ्यन्तमनुवर्तते। भिसि परे षषोऽत एत् स्यात्। छएहिं[44] ॥

५. १२७. छा भ्यसि

भ्यसि परे षषश्छा स्यात्। छाहिंतो, छासुंतो ॥

---

40 B रुक्खेण which is not authorised by the Mss.

41 B णईहिन्तो. The Sū. 122 is preserved only in A among Mss. without comm.

42 From Sū. 123 upto this Mss. except A om.; A preserves mostly the Sūtras only.

43 U भिस पतत् (-तो in G); IO भिस्य षतत्.

44 This line is lacking in UGIO.

५. १२८. स्त्रियां भिस्सुपोश्च स्यात् ॥ ८४ ॥
छेत्येव। चकाराद् भ्यसि च। छाहिं बालाहिं। छासुं। छाहिंतो, छासुंतो ॥

५. १२९. द्वित्वे बहुवचनम्
द्वित्वे वाच्ये बहुवचनं स्यात्। प्राकृते द्विवचनं नास्त्येवेति भावः। दो माणुसा, द्वौ मानुषौ। उहे मित्तावरुणा ॥

५. १३०. षष्ठी तु चतुर्थ्याः
चतुर्थ्याः स्थाने षष्ठी स्यात्। णमो हरिणो। साहा अग्गिस्स। सहा पिअ-राणं। बम्हणाणं देइ ॥

५. १३१. क्वचिन्न तादर्थ्ये।
तादर्थ्ये विहितायाः चतुर्थ्याः षष्ठी न स्यात्।— 'पाणाअ गओ भमरो लब्भइ दुक्खं गइंदेसुं[45] [= पानाय गतो भ्रमरो लभते दुःखं गजेन्द्रेषु]। 'सुहाअ रज्जं किर होइ रण्णो' [= सुखाय राज्यं किल भवति राज्ञः] इति मम विलासवतीसट्टके। क्वचिद्ग्रहणमबहुत्वार्थम्। रुक्खाणं वल्लीओ। जूवाणं दोल्लइं[46] ॥

५. १३२. बहुलमनुस्वारः स्याट्टाम्ङिभिसिंसुप्सु
टा आम् ङि भिस् इं सुप् इत्येतेषु अनुस्वारो बहुलं स्यात्। रुक्खेणं रुक्खेण, अम्हाणं अम्हाण, अम्हं अम्हा, रुक्खाणं रुक्खाण, कईणं कईण, एत्थं, एत्थ, रुक्खें रुक्खे, रुक्खम्मि-रुक्खम्मि, रुक्खेहिं रुक्खेहि, रुक्खाइं रुक्खाइ, वणाइं वणाइ, अग्गीसुं अग्गीसु, इत्यादौ विकल्पः। दहिणा महुणा अग्गिणा अम्हो वो णे इत्यादौ न स्यात् ॥

५. १३३. विनिमयश्च सुपाम्।
सुपां विनिमयः परिवर्तश्च बहुलं स्यात्। रत्तिं दिट्ठो सि, रात्रौ। अच्छीसुं पिज्जसि[47] ॥

45 A गइंदेसुं; BA लब्भइ which is wrong.

46 A om. from सुहाअ up to this.

47 UGIO om. the rules 127–133. Moreover the comm. of 133–134 are not faithfully recorded in Mss. UGIO om. from रत्तिं; A भिज्जसि for पिज्जसि.

५. १३४. वीप्सायां पूर्वपदे भवेद् द्वितीयैकवचनं वा ॥ ८५ ॥

अंगमंगाइं । घरंघरेण । वणंवणेहिं । अंगमंगाणं । घरंघरेसुं[48] ॥

इति श्रीमार्कण्डेयकवीन्द्रकृतौ प्राकृतसर्वस्वे भाषाविवेचने
महाराष्ट्रयां सुब्विधिः पञ्चमः पादः ॥ ५ ॥

---

48 UGIO om. the last but one ex. and read ु for ुं in the last ex. of this Sū.

## षष्ठः पादः ।

६. १. लट् भूतभाविनोर्वा स्यात्

भूतभाविनोः काल्योर्लट् वा स्यात् । होइ, अभवत् बभूव । पक्षे होहीअ, होइ, भूयात् भविता भविष्यति अभविष्यत् । पक्षे होहिइ ॥

६. २. अदन्तस्योभयं पदम् ।

अदन्तस्य धातोरुभयपदं स्यात् अविशेषात् कर्तरि भावकर्मणोश्च । पचइ, पचए । वड्डइ, वड्डए । ईअइज्जादीनामदन्तत्वात् पढीअइ पढीअए, बन्दिज्जइ बन्दिज्जए[1], दिज्जइ दिज्जए, खज्जइ खज्जए, पेक्खइ पेक्खए, इत्यादयः ॥

६. ३. परस्मैपदमन्येषाम्

अदन्तानामन्येषाम् । णेइ । देइ । होइ । विकरणस्यानदन्तत्वात्[2] । पढहिइ, वड्डहिइ ॥

६. ४. तेतिक्कोरेदितौ स्मृतौ ॥ ८६ ॥

पचए, पचइ । वड्डए, वड्डइ[5] । 'प्रायः कग' ( PS II. 2 ) इत्यादिना तलोपेनैव सिध्यति, किमनेन[6] सूत्रेणेति न वाच्यम् । तस्य प्रायिकत्वात् पढदि पढदे इत्याद्यनिष्टसिद्धेः । नाटकेषु तथा दृश्यत इति चेत् महाराष्ट्रीतरासु भाषासु तथा सिद्धेर्न विरुद्धम् । राजशेखरस्य महाराष्ट्र्याश्रयेषु श्लोकेष्वपि दृश्यत इति चेत्[7], तस्यैवाविमृश्यकारित्वम्, नापराधोऽनुशासनानाम् ॥

---

1 B बन्दिज्जइ, बन्दिज्जए ; UIO give only बन्दिणिद ; G पडिणिए, and om. दिज्जइ. The reading suggested is according to A. This is also confirmed by ex. given under Sū 3. 2 A om.

3 UIO om. and gives a single corrupt ex. : पढिहिइव.

4 BG °णउ. But others invariably read what is suggested above.

5 This set of ex. is according to Mss. with single exception in G which gives वड्डइ ; B पढए, पढइ ; वड्डए, वड्डए.

6 Mss. om. from तलोपे° up to this. A om. the entire portion after वड्डइ.

7 B महाराष्ट्रीप्रयोगेष्व° ; I महाराष्ट्र्यां प्रयोगे° ; O °राष्ट्र्या° केचित् ; A om. ; G महाराष्ट्र्याश्रये श्लोकेऽपि ; U महाराष्ट्रीप्रयोगे° ; em. is mine according to G.

६. ५. एर्मिः

स्यात्। वड्ढामि। सेसिडोस्तु कार्यान्तराभावात् पढसि पढसे, वड्ढसि वड्ढसे। मण्णे जाणे इति तु संस्कृतात्॥

६. ६. लटि मिङ इल्लुग् वा

स्यात्। पढं। हसं। मो बिन्दुः। पक्षे पढामि हसामि। लटीति किम्। काहिर्मि[8]॥

६. ७. प्रायेणात एदिदातः स्युः।

धातोर्विकरणस्य वा अतः स्थाने। प्रायेणेति वचनात् तिङ्सिङोरादेतौ वा। भणइ भणाइ भणेइ, भणसि भणासि भणेसि।[9]अन्त्यन्त्वन्तेसेइत्यादेशेषु निषेध एव। भणंति भणंतु भणंति भणसे भणित्था। हादेशे उत्तमे च त्रयोऽपि वा, भणह भणेह भणाह भणिह, हसमि हसामि हसेमि हसिमि, पढमो पढेमो पढिमो पढामो, क्तक्तवत्वोरिदेवं, भणिअं भणिअवंतो, क्त्वातुंतव्येष्वेदितावेव, भणिऊण भणेऊर्णं, हसिउं हसेउं, पढिअव्वं पढेअव्वं॥

६. ८. भूम्नि न्ति, हइत्था, मोमुमाः

भूम्नि बहुत्वे अर्थात् त्रयाणां पुरुषाणाम् एकद्वित्रिक्रमादेते आदेशाःस्युः। प्रथमस्य होंति, पढंति। मध्यमस्य होह होइत्था,[10] पढह पढित्था। उत्तमस्य होमो होमु होम, पढामो पढामु पढाम॥

६. ९. अतोऽन्ते तु वा प्रथमे॥ ८७॥

अत उत्तरे प्रथमपुरुषे बहुत्वेऽन्ते वा स्यात्। तुवरंते, तुवरंति॥

६. १०. यक ईअ इज्ज इत्येतौ

स्याताम्। पढीअई, पढिज्जइ॥

६. ११. अस्तेः सिः सिङा

सिङा सहास्तेः सिः स्यात्। सि असि॥

६. १२. मिङाऽम्हि म्हि।

मिङा सहास्तेरम्हि म्हि इत्येतौ स्याताम्। अम्हि, म्हि, अस्मि॥

---

8 Mss. om. portion from लटीति up this word.

9 UGIO इत्या० ; A om. the entire portion after भणासि.

10 Mss. om. the portion from क्त्वा up to this word. Moreover in most of the places these are corrupt.

11 U अक्रिह ; IO अतिह ; G अक्ह ; A reads correctly.

६. १३.   अम्हो म्होऽम्ह म्ह मसा

मसा सहास्तेरमी चत्वारः स्युः । अम्हो, म्हो, अम्ह, म्ह, सः ॥

६. १४.   त्थ थताभ्यां

लड्लोटोर्मध्यमस्य बहुवचनाभ्यां सह[12] अस्तेर्द्वित्वापन्नथः स्यात् । त्थ स्थ स्त वा ।— 'धरणिधरेणे[13] भुअ चिअ महणम्मि सुरासुरा खअम्मि समुद्दा । हंतव्वम्मि दहमुहे एण्हि तुम्हे त्थ महुमहस्स सहाआ ॥' [ = धरणीधरणे भुजाः एव मथने सुरासुराः क्षये समुद्राः । हन्तव्ये दशमुखे इदानीं यूयं स्थ मधुमथस्य सहायाः ॥ R. III. 3 ] इति सेतुः । अत्थि अत्थु इति संस्कृतात् ॥

६. १५.   भूत आसि आहेसि ॥ ८८ ॥

अविशेषात् सर्वेषु पुरुषेषु वचनेषु च भूतकाले अस्तेरिमावादेशौ स्याताम् । आसि, आसीत् आसम् आसीः आस्त आसं आस्म वा । एवं आहेसि ॥

६. १६.   अकास्यकासमौ स्यातां स्थानेऽकार्षीदकार्षमोः ।

पदादेशोऽयम् । अकासि । अकासं ॥

६. १७.   शतृशानयोर्न्तमाणौ

स्याताम् । पढंतो, पढमाणो ॥

६. १८.   लृङर्थे वा

क्रियातिपत्तिर्लृङर्थः । तस्मिन् शतृशानयोर्न्तमाणौ स्याताम् । जइ पढंतो ता पंडिदो होंतो । जइ भुंजमाणो ता थिप्पमाणो ॥

---

12 UGIO om. from here up to the Sū No. 40; whereas A retains the same in an imperfect form. Curiosly they intermingle the comm. of both the Sūtras and read like this- मह रूपेषु सर्वेषां वचनानां, thus omitting Sū 40 altogether. The omission on the part of UGIO must have been due to sheer carelessness of the scribe who had copied the original work by overlooking some leaves. This sort of long omission is also noticeable in UGIO elsewhere.

13 A om. this quotation ; B reads धरणेo which should actually be धरणेe ; cf. R. III, 3.

६. १९. **अत एव माणः स्यात् ।**

नियमसूत्रमिदम् । अत उत्तरमेव माणः स्यात् । पढमाणो । कुणमाणो । अनतस्तु होंतो देंतो ॥

६. २०. **ईश्च स्त्रियां**

स्त्रियां शतृशानयोः स्थाने ईत् स्यात् । पढई । वड्ढई । चकारात् पढंती पढमाणा पढमाणी ॥

६. २१. **भविष्यति हिः**

भविष्यच्छब्दो भविष्यत्कालविहितप्रत्ययोपलक्षणार्थः । तेन लृङ्-लुट्-लृट्-लिङ्षु परेषु धातोर्हि विकरणः स्यात् । होहिइ, भूयात् भविता भविष्यति अभविष्यत् ।— 'लङ् भूतभाविनोर्वा स्यात्' ( PS. VI. 1 ) इति तिङादयः । होहिंति भूयासुः भवितारः भविष्यन्ति अभविष्यन् । एवं मध्य-मोत्तमयोः ॥

६. २२. **स्स च**

भविष्यति स्सश्च विकरणः स्यात् । होस्सइ । पढिस्सइ ॥

६. २३. **शतृशानयोर्लुग् वा ॥ ८९ ॥**

शतृशानयोः परयोः स्सस्य लुग् वा स्यात् । होस्संतो, होंतो । पढिस्समाणो, पढमाणो ॥

६. २४. **स्सा होत्तमे**

वेत्येव । भविष्यत्युत्तमपुरुषे स्सा हा इत्येतौ विकरणौ स्याताम् । भणिस्सामि, भणिहामि, भणिहिमि । भणिस्सामो, भणिहामो, भणिहिमो । अर्थभेदाल्लिङ् लुङ् लृङ् लङ् । एवमुत्तरत्रापि ॥

६. २५. **मिङा स्सं**

स्यात् । भविष्यतीत्येव । भणिस्सं । वानुवृत्तेः भणिस्सामि, भणिहामि, भणिहिमि ॥

६. २६. **हिस्सा हित्था तु मोमुमैः स्याताम् ।**

भविष्यति मोमुमैः सह हिस्सा हित्था इत्येतौ वा स्याताम् । भणिहित्था, भणिहिस्सा । पक्षे भणिहिमो भणिहिमु भणिहिम । अर्थभेदाल्लिङादयः ॥

**६. २७. एकवचनं च हित्था भवेत्कृञः प्रथममध्यमयोः ॥ ९० ॥**
भविष्यति कृञः प्रथममध्यमयोः एकवचनं हित्था च वा स्यात् । काहित्था, क्रियात् कृषीष्ट क्रियाः कृषीष्ठाः वा । लुङ्-लृङ्-लृट्स्वप्येवम् । चकारात् पूर्वसूत्रात् मोमुमैः सह काहिस्सा काहित्था क्रियास्मः कृषीमहि इत्यादयः ॥

**६. २८. काहं दाहं कृदाञोः स्तः**
भविष्यति वेति च । मण्डूकप्लुतिन्यायात् मिङा सह । काहं । दाहं । पक्षे काहिमि, देहिमि । अर्थभेदाल्लिङादयः ॥

**६. २९. श्र्वादीनां सोच्छामादयः ।**
भविष्यति मिङा सह स्युः । श्रु सोच्छं । वच वोच्छं । गम्लृ गच्छं । रुद रोच्छं । दिश दिच्छं । मुच्लृ मोच्छं । विद वेच्छं । भिद भेच्छं । छिद छेच्छं । श्रूयासं श्रोतास्मि श्रोष्यामि अश्रोष्यम् इत्यादयोऽर्थाः । आकृतिगणोऽयम् ॥

**६. ३०. अबिन्दवस्त्रिष्वपि ते स्सस्साहां लुक् च हेस्तु वा ॥ ९१ ॥**
त्रिषु कालेषु त्रिषु पुरुषेषु एकवचनद्विवचनयोरपि ते सोच्छमादयो बिन्दुवर्जिताः सन्तः श्रवादीनां प्रकृतेरेवादेशा वा भवन्ति । तत्र भविष्यति विहितस्य विकरणस्य स्सस्य स्सा हा इत्येतयोरुत्तमे विहितयोश्च लुक् च स्यात् । हेर्विकरणस्य तु लुग्वा स्यात् । लटि सोच्छइ, सोच्छंति । लिङ्लोटोस्तु सोच्छउ, सोच्छंतु । एवमन्यत् । भविष्यति लिङादौ सोच्छइ, सोच्छंति, सोच्छसि, सोच्छह, सोच्छहित्था, सोच्छिमो, सोच्छमु, सोच्छिम ।— 'प्रायेणात एदिदातः स्युः' (PS. VI. 7) इतीत् । पक्षे सोच्छहिइ, सोच्छहिंति, सोच्छहिंसि, सोच्छहिह, सोच्छहित्था, सोच्छहिमि, सोच्छहिमो सोच्छहिमु, सोच्छहिम इत्यादयः । श्रूयात्, श्रोता, श्रोष्यति, अश्रोष्यत् इत्यादयोऽर्थाः ॥

**६. ३१. लिङ्[14]लोटोरेकस्मिन्नु[15] सु मु स्युः**
वेति निवृत्तम् । लिङ्लोटोस्त्रिषु पुरुषेषु एकस्मिन् वचने क्रमाद् उँ[14][15] सु मु इत्येते त्रयः स्युः । कुणउ, कुर्यात् कुर्वीत करोतु कुरुताम् । कुणसु । कुणमु ।

---

14 & 15 In these two places and also in the last sent. of comm. B reads दु instead of उ which is the reading authorised by A and most probably is the original reading; for Mk. does not write दुकारं भाषान्तरार्थम् here as he has done elsewhere in similar case. Also cf. Bhām. VII. 18. So the reading of A seems to be appropriate.

लिङ्त्वाविशेषोपादानादाशीर्लिङ्यपि उ सु मु प्रभृतय इत्येके ॥

६. ३२. मध्यमे हिवैकाचः ।[16]

लिङ्लोटोर्मध्यम एकाचो धातोरेकवचने हि[17] वा स्यात् । होहि । होसु । देहि, देसु, दद्याः ददीथाः देहि दत्स्व देयाः दासीष्ठाः ॥

६. ३३. अत उत्तरस्य लोपः

लिङ्लोटोर्मध्यमैकवचनस्यात उत्तरस्य लोपो वा स्यात् । कुण, कुणसु । कुर्याः कुर्वीथाः कुरु कुरुष्व क्रियाः कृषीष्ठा वा ॥

६. ३४. नित्यं स्याद्भूमनि न्तु ह मो ॥ ९२ ॥

लिङ्लोटोर्भूमनि बहुत्वे क्रमेण नित्यं न्तु ह मो स्युः । कुणंतु कुर्युः कुर्वीरन् कुर्वन्तु कुर्वन्तां क्रियासुः कृषीरन् वा । कुणह कुर्यात कुर्वीध्वं कुरुत कुरुध्वं क्रियास्त कृषीध्वं वा । कुणमो कुर्याम कुर्वीमहि करवाम करवामहै क्रियास्मः कृषीमहि वा ॥

६. ३५. ज्जो ज्जाही च तिङां वा

लिङ्लोटोस्तिङां त्रिषु पुरुषेषु सर्वेषां वचनानां स्थाने ज्जो ज्जाही वा. स्याताम् । कुणेज्जो, कुणेज्जाहि ।– 'प्रायेणातः' ( PS. VI. 7 ) इत्यादिनैत्वम् । पक्षे कुणउ कुणंतु इत्यादयः ॥

६. ३६. ज्जा लङ्लुङ्लृङां चापि ।

लङ्-लुङ्-लृङां लिङ्लोटोरपि तिङां स्थाने ज्ज ज्जा इत्येतौ वा स्याताम् । कुणेज्ज, कुणेज्जा । पक्षे, कुणइ, कुणंति, काहिइ, काहिंति इत्यादि । लृङि–जइ पढेज्ज ता पंडिओ[18] होज्ज, पढेज्जा होज्जा वा । पक्षे, जइ पढंतो ता पंडिओ होंतो ॥

---

16 The reading of B is हिरेकाचः instead of the reading given above in conformity with A. When there is no continuation of वा ( = option ) on account of the declaration made by the preceding Sū. i.e., 31 as 'वेति निवृत्तम्' and here, there is need of introducing वा, the reading as given in A seems to be correct.

17 B हिः ; A हि ; the reading of A preferred for the same reason as above.

18 A reads this correctly as against स्तः of B. 19 B पण्डिय (ओ.)

६. ३७. मध्ये चैकाचः

एकाचो धातोर्लडादितिङां मध्ये च ज्ज ज्जा वा स्याताम् । देज्जइ, देज्जाइ । पक्षे देज्ज, देज्जा, देइ । होज्जउ, होज्जाउ । पक्षे होउ, होज्ज, होज्जहिदि । एवं सर्वत्र ॥

६. ३८. न झान्तिन्त्वोः

अन्त्यिन्त्वोः परयोः ज्जा न स्यात् । देज्जंति । देज्जंतु ॥

६. ३९. लृटि च कर्तरि यक् ॥ ९३ ॥

अस्मादिहिश्च

संस्कृते लडादिचतुष्के भावकर्मणोर्यग् विहितः । प्राकृते स एव लृटि स्यात् । ततो यक आदेशौ । तस्माद्यक उत्तरे इहिश्च स्यात् । सुमरिज्जिहिइ मए । स्मरिष्यते मया । यक इज्जादेशः ।– ' गम्मिहिसि तस्स पासं ' [ = गमयिष्यसे तस्य पार्श्वम्, GS. VII. 7 ] इति सप्तशत्याम् । गमयतेर्यगन्तत्वे[21] द्वित्वम् । एवं वज्जिहिसि वादिष्यसे, खज्जिहिसि खादिष्यसे ॥

६. ४०. भूते त्वीअः स्यात्

भूतकाले विहितानां लङ्लिङ्लुङ्लृङां तिङां त्रिषु पुरुषेषु सर्वेषां वचनानां स्थाने ईअः स्यात् । हुवीअ, अभवत् बभूव अभूत् अभविष्यत् । अभवन् बभूवुः अभूवन् अभविष्यन् । एवं मध्यमोत्तमयोः ॥

६. ४१. हीअ एकाचः ।

एकाचो धातोर्भूतविहितानां लङादितिङां स्थाने हीअः स्यात् । काहीअ अकरोत् चकार अकार्षीत् अकरिष्यत् इत्यादि पूर्ववत् । वानुवृत्तेः होइ, कुणइ, हुवइ ॥

६. ४२. प्रायेण वर्तमानेऽप्येतौ स्याताम्

वर्तमाने विहितानां तिङां स्थाने ईअ हीअ इत्येतौ स्याताम् । सोहीअ शोभते शोभन्ते इत्यादि । देहीअ ददाति दत्ते ददति ददते दीयते दीयन्ते वा ॥

---

20 This portion is lacking in B ; A altogether om. the comm. which most probably existed in the original work.

21 Originally in Mss. यमयतेरन्तत्वे as recorded by B is definitely incorrect.

६. ४३. पुरादियोगे च ॥ २४ ॥

पुरादियोगे भूते भाविनि विहितानां तिङां स्थाने च ईअ हीअ इत्येतौ[22] स्याताम्। पुरा[23] जाहीअ पुरा याति। एवं एत्थ पुरा वसीअ छत्ता, अत्र पुरा वसन्ति छात्राः। माङ्योगे लुङ्। मा हुवीअ। मा होहीअ॥

६. ४४. णिङ आवे वा

व्याख्यानतो विशेषप्रतिपत्तेः प्रयोजके विहितस्य णिङः स्थाने आवे वा स्यात्। कारावेइ। पढावेइ। वड्ढावेइ। चोरयितुं प्रयुङ्क्ते चोरावेइ। कारावेंति। पढावेंति। पक्षे करेइ पढेइ इत्यादि। अदादेशसूत्रेण णिङ एत्त्वम्। अदन्तत्व-पक्षे कारइ पाढइ इत्यादयः। प्रयोजकणिङ इति किम्। चोरेइ। चिंतेइ॥

६. ४५. प्रायेणादेरातोऽत्

प्रयोजकणिङि धातोरादेराकारस्याकारः स्यात् संस्कृतानुशासनेन वृद्ध्यादिकार्ये कृते सति। करावेइ। पढावेइ। प्रायेणेतिवचनात् आवेविधौ प्रवृत्तिः, आवविधौ विकल्पः। एत्वविधौ अदन्तत्वविधौ अत इत्त्वविधौ च निवृत्तिः। एषामुदाहरणान्युत्तरत्र वक्ष्यामः॥

६. ४६. क्वचिदवश्च।

प्रयोजके स्वार्थे वा णिङ स्थाने अवः स्याद्वा। क्वचिदिति सिद्धप्रयोगानुसारात् युक्तान्तधातुविषये। वड्ढवइ। पेल्लवइ।–'छिविओ[25] सरिएहिं पेल्लवंतं वे[26] महिं' [= स्पृष्टा प्रसृतकैः प्रेरयन्तमिव महीम्, R. II, 8]। पक्षे वड्ढेइ वड्ढावेइ, पेल्लेइ पेल्लावेइ॥

६. ४७. भावे कर्मणि चावे न स्यात्

स्पष्टम्। उत्तरत्रोदाहार्यम्॥

---

22 B inserts च here which is not authorised by Mss.

23 UGIO om.; IO also om. portion from here up to कारावेइ in the next Sū.

24 U णिउ०; GIO णिवु०; A om. the line entirely.

25 U च्छुविओ; G च्छुविः; IO च्छुवि; A om. the quotation.

26 UGIO वे; B व; the original reading is perhaps व्व. Em. is mine.

**६. ४८.　　आवश्च कृति णकादौ च ॥ ९५ ॥**

वेत्यनुवर्तते । आवेविधेरपवादः । णकादौ कृति परे चकारात् भावे कर्मणि च प्रयोजकणिकः स्थाने आवः स्यात् । णक् तृङ् तृङि क क्तवतु तव्यैङ् अनीयङ् क्नट् क्न तुमङ् क्त्वा यच् इत्येते णकादयः । पढावओ, पाढावओ । पढाविआरो, पाढाविआरो । पढाविरो, पाढाविरो । पढाविओ पाढाविओ । पढाविअवंतो, पाढाविअवंतो । पढाविअव्वं, पाढाविअव्वं– 'प्रायेणात एदिदातः स्युः' ( PS. VI. 7 ) इति आवस्यात इदेतौ । पढावणिज्जं, पाढावणिज्जं, आवस्याल्लोपः । पढावणं, पाढावणं । पढविउं, पाढाविउं, अत्रावस्यात एत्वम् इत्वं वेति द्विरूपम्, पढाविउं, पाढाविउं । पाढवेऊण, पाढाविऊण, पढावेऊण, पाढावेऊण । विहसाविऊण विहासावेऊण, विहसावेऊण, विहासावेऊण । विहसाविअं, विहासाविअं । वानुवृत्तेरदन्तत्वपक्षे–पाढओ, पाढिआरो, पाढिरो, पाढिओ, पाढिअवंतो, पाढिअव्वं, पाढेअव्वं, पाढणिज्जं, पोढणं, पाढिउं, पाढेउं, पाढिऊण, पाढेऊण, विहासिऊण विहासेऊण, विहासिअं । चकारात् क्वचिदवश्च । वड्डवओ, वड्डावओ । सिक्खवओ, सिक्खावओ ।–'तं मण्णे मह दुक्किदं[29] परिणदं दुक्खाण सिक्खावणं' [ = तन्मन्ये मम दुष्कृतं परिणतं दुःखानां शिक्षकम्, KM. II. 8 ] इति राजशेखरः । प्रायोनुवृत्तेरदन्तानामाकारेण सहावादेशो दृश्यते । आणावइ । वक्खावइ । उड्डावइ । तथा च वाक्पतिराजस्य—

---

27 UGIO om. portions starting from Sū. 47 up to this, the rest of the sent. being corruptly retained as: U– अक्कीय ळंन्तं करन्तं क्वण चैकेण कादयः । G– अक्कीअणंन्तं देन्तं क्वण चैकेणकादयः । IO– अनीयळंतं नरंतं काण ( क्वाण in O ) चैसेनेणकादयः ।

28 This word supported by B is wanting in Mss. A om. the entire portion after पढाविआरो.

29 B दुक्खिदं ; U दुक्खाड ; I दुक्कांत ; O दुदुक्कांत ; G पदक्वाम्नत्वं ; em. according to the reading given in Dr. Ghosh's edition, which most probably is the original reading. However, for the correctness of the reading of both B and Ghosh, cf. Mk. III. 37–39.

' वड्ढुविअमअणगव्वं सिढिलाविअमाणमाहप्पं ।
उट्ठाविअचिरविअणं उग्गच्छइ अग्गदो क्खु ससिबिंबं[30] ॥ '
[ = वर्धितमदनगर्वं शिथिलितमानमाहात्म्यम् ।
उत्थापितचिरवेदनमुद्गच्छति अग्रतः खलु शशिबिम्बम् ॥ ] इति ॥

इति श्रीमार्कण्डेयकवीन्द्रकृतौ प्राकृतसर्वस्वे भाषाविवेचने
महाराष्ट्र्यां तिङ्विधिः षष्ठः पादः ॥ ६ ॥

---

30 The reading of this verse is very corrupt in Mss :
U– विड्डुविअ ममअणगव्वं सिचिणाविअमाणमाहप्पं ।
उद्वाविंअचिरविकाण अंडप्पाराइअग्गतोअमसिविंबमिति ॥
IO– विड्डुविअ अमंताणगव्वं सिच्चिकाअनिमाणमाहप्पं ।
उड्ढा ( -ढा in O ) विअअचिरविकारण अंडप्पाराइअग्गदोअमसिविंबमिति ॥
G– विड्डुविअ अमत्ताणगव्वं सिविणासुअ माणमाहप्पं ।
अप्पाविअं अचिरविकाणअं उप्पाराज अग्गद्वारसमसिविंबमिति ॥

## सप्तमः पादः ।

७. १. भवतेर्होहुवौ स्याताम्

स्पष्टम् । होइ, हुवइ ॥

७. २. प्रादुष्प्रादेर्भवो भवेत् ।

प्रादुरादेः प्रादेश्च । पादुब्भवइ । आविब्भवइ । पहवइ । परिहवइ ॥

७. ३. क्ते हूः

क्ते परे भवतेर्हूः स्यात् । हूओ । भूतपतौ भूअवईति संस्कृतात् ॥

७. ४. प्रकृतिरेव स्यात् प्रादुराविःसमुद्भुवः ॥ ९६ ॥

एभ्य उत्तरस्य भवतेः क्ते परे प्रकृतिरेव स्यान्नादेशान्तरम् । पादुब्भूओ । आविब्भूओ । संभूओ । उब्भूओ । अन्यतस्तु—पहूअं, परिहूओ । बहिब्भवइ, बहिब्भूओ इति केचित् ॥

७. ५. प्रादुद्घुप्पश्च

प्रादुत्तरस्य भवतेर्हुप्पादेशः स्यात् । पहुप्पइ । चकारात् पक्षे पहवइ ॥

७. ६. त्वरस्तूरतुवरौ

स्याताम् । तूरइ, तुवरइ[1] ॥

७. ७. क्ते तुरो भवेत् ।

त्वर इत्येव । तुरिअं, अत इत्वम् ॥

७. ८. नुदो णोल्लः

स्यात् । णोल्लइ ॥

७. ९. घोलघुम्मौ घूर्णेः

घूर्णेतेरिमौ स्याताम् । घोलइ, घुम्मइ ॥

७. १०. दूमस्तु दूयतेः ।

दूयतेर्दूमः स्यात् । दूमइ ॥

७. ११. पाटेः फालः

स्यात् । फालइ ॥

७. १२. तृपेस्थिप्पः

स्यात् । थिप्पइ[2] ॥

---

1 G has two more forms; तुरइ, तुवरए. 2 A om.

७. १३. ज्ञो जाण मुण इत्युभौ ॥ ९७ ॥

स्याताम् । जाणइ, मुणइ ॥

७. १४. स्मरतेर्भरसुमरसुढाः

त्रयः स्युः । भरइ, सुमरइ, सुढइ ॥

७. १५. वेः सूरः

वेरुत्तरस्य स्मरतेः सूरः स्यात्, विसूरइ ॥

७. १६. सरश्च दीर्घो वा ।

वेरुत्तरस्य स्मरतेः सरः स्यात् , वेर्दीर्घो वा । विसरइ, वीसरइ । चकारः पूर्वसमुच्चयार्थः ॥

७. १७. म्हर इत्येके

वेरुत्तरस्य स्मरतेः म्हर इत्येके । विम्हरइ ॥

७. १८. प्रान्म्हअ

प्रात् स्मरतेः म्हअ स्यात् । पम्हअइ ॥

७. १९. जल्पेर्जम्पः

स्यात् । जंपइ ॥

७. २०. क्षियो झिज्झः ॥ ९८ ॥

स्यात् ।— 'झिज्झइ झिण्णा वि तणू' [ = क्षीयते क्षीणापि तनुः, R. I. 35 ] ॥

७. २१. ढाकढुकः

स्यात् । ढुकइ ॥

७. २२. क्षुधेर्धुकः

स्यात् । धुकइ ॥

७. २३. ग्रन्थेर्गुंथः

स्यात् । गुंथइ ॥

---

3. U om. this sent.; G °इत्यादेशः. 4 GIO जम्म. UA agree with B.

5. UG रिज्जइणाविंतश्च ; IO रिरिज्जः इणाविंतश्च ; A झिझइ झिणावि तणु.

6 UIO भाकश्च ( चु in O ) कः ; G भासेर्बु( बु )कः.

7 B reads गुन्थ in place of गुन्थ which seems to be the correct reading as given by UIAO. G, however, reads incorrectly ; ग्रन्थेर्गुन्थः, गुन्थइ. The verb गुन्थ ( गुन्थिबा ) is used in Oriya also.

७. २४. गिरो गिलः ।

स्यात् । गिलइ ॥

७. २५. निरः पद्येर्वलः

निर उत्तरस्य पद्यतेर्वलः स्यात् । णिव्वलइ ॥

७. २६. माडो माणो वा

निरो माडो माणो वा स्यात् । णिम्माणइ, णिम्माइ ।— 'णिम्माअमज्जणसुहा' [ = निर्मितमज्जनसुखाः, R. 1. 20 ] इति सेतुः ॥

७. २७. ममवावपि ॥ ९९ ॥

निरो माडो ममवावपि स्याताम् । णिम्मइ, णिम्मवइ ॥

७. २८. व्युत्पद्यतेर्विढप्पः

स्यात् ।— 'विढप्पंति गुणा' [ = व्युत्पद्यन्ते गुणाः, R. I. 10 ] ।

७. २९. तिङि भावीहौ भियः स्याताम् ।

स्पष्टम् । भाइ, वीहइ । बिहेईति संस्कृतात् । तिङीति किम् । 'पीलणभीओ व्व हिअआदो' [ पीडनभीत इव हृदयात्, KP, IV, SL. No. 66 ] ॥

७. ३०. णिङि भाअमिसौ

स्याताम् । भाअइ, भिसइ । भाएइ, भिसेइ । भाआवेइ, भिसावेइ । भेसेइ इति तु भेषृ भये धातोः । भीसेइ इति भीषयतेः ॥

७. ३१. म्लायो वा वाअ मिलाअ इत्येते ॥ १०० ॥

त्रयः स्युः । वाइ, वाअइ, मिलाअइ ॥

७. ३२. जृम्भेर्जंभाअ-जंभाहौ

स्याताम् । जंभाअइ, जंभाहइ ॥

---

8 UIOG निव्वलइ; A agrees with B.

9 A reads विढप्प in place of विढप्प; but UGIO read विप्पे.

10 B reads भीह in place of वीह in Sū. as well as in the comm. UGIO read बाह in the Sū.; so also UG give बाहइ as ex. I reads बहइ. A, however, reads बिह in Sū. as well as in comm. ( ex. बीहइ ) which seems to be correct one; cf. He. IV, 53 & Rt. I, 8, 7. The reading of UGI shows that बाह is the result of confusion with the actual word वीह; hence em. 11 Mss. om. these two exs.

12 B reads जम्भ in place of जृम्भ here and in following rules relating to जृम्भ. Mss. read invariably जम्भ; cf. Vr. VIII, 14.

७. ३३. आदेर्जंभ च दृश्यते ।
विजंभई[13] । उज्जंभइ ॥

७. ३४. वहि जंभइ जंभाहा इति वापि च कश्चन ॥ १०१ ॥[14]
जंभहइ, जंभाहीइ[15] । कश्चन वसन्तराजः ॥

७. ३५. चिनश्चिणः स्यात्
चिणइ ॥

७. ३६. उदो वा
उच्चिणइ, उच्चेइ ॥

७. ३७. श्रद्धाञः सद्दहो भवेत् ।[16]
अस्य श्रत्पूर्वस्य व्यतिरेकेण प्रयोगो न दृश्यते । सद्दहइ ।– ' दिट्ठ त्ति ण सद्दहिअं ' [ = दृष्ट इति न श्रद्धितम्, R. I, 38 ] ॥

७. ३८. क्रीञः किणः
किणइ ॥

७. ३९. वेस्तु वा स्यात्
विकिणइ, विकेई[16] ॥

७. ४०. ध्मो धमः
स्यात् । धमिज्जइ ॥

७. ४१. सोद् उद्धुमा[17] ॥ १०२ ॥
उदा सहितस्य ध्म उद्धुमा स्यात् । उद्धुमाइ ॥

७. ४२. उद्धुमाअ च केषांचित्
मते । उद्धुमाअइ ।– ' होंति सलिलुद्धुमाइअधूमाअंतवलवामुहा मअरघरा '

---

13 G wrongly reads बिजम्भइ.

14 B जम्हाइ जम्हाहा इति हाकश्च कश्चन ; A has the same reading as B excepting म्भ in place of म्ह ; G जम्हइ जम्हाहाविति वापि च कश्चन ; IO जम्भाहा इति विहट्ठश्च कश्चन ; U जम्भक् जम्भाहा इति व हाकश्चे कश्चन ; of all these readings the reading of G alone is sensible. Hence I have emended after the reading of G. The rule definitely relates जृम् and not to हा.

15 G जम्भहइ, जम्भाहइ ; U जम्भहइ. जम्भाहाइ ; IO जम्भहइ, जंभाहाइ ; B जम्हायइ, जम्हाहाइ ; A same as B excepting म्भ in place of म्ह ; em. according to UG ; cf. हाइ in the sense of yawning in Oriya.

16 UG om. rules 37–39 ; IOA retain them ; A सद्दहो for सद्दहो.

17 UIO सोद ; G सोइ for सोद.

[ = भवन्ति सलिलोष्मापितधूमायमानवक्त्रामुखाः मकरगुहाः, R. I. 8 ] इति सेतुः ॥

७. ४३.                घ्र ओजिम्हेजिह्नावपि ।

जिघ्रतेरिमौ स्याताम् । ओजिम्हइ, ईजिह्हइ । अपिशब्दात् – 'सब्भमरपउमग्घाइरि' [ = सभ्रमरपद्मघ्राणशीले, KP. V. ŚL. No. 185 ] इति समाधेयम्[18] ॥

७. ४४.        घ्रसेर्घिसः[19]

स्यात् । घिसइ ॥

७. ४५.                खगेरोत्थढक्कौ

स्याताम् । ओत्थइ, ढक्कइ । बाहुल्यात् थएइ ॥

७. ४६.                खुप्पभिसौ ग्रुपेः ॥ १०४ ॥

स्याताम् । खुप्पइ, भिसइ ॥

७. ४७.        सक्कसप्पौ सृपेः

स्याताम् । सक्कइ, सप्पइ ॥

७. ४८.                चच्छरंपरंभास्तु तक्षतेः[20] ।

त्रयः स्युः । चच्छइ, रंपइ, रंभइ ॥

---

18 UGIO are hopelessly corrupt with regard to this Sū. as well as its comm.; A om. comm. portion.

U– माओतिए जिह्वावपि । ०ओकिंहइ, इमिहइ ;
मतसब्भदान्सतमताणा इरि इति समाधेयम् ॥

G– भओभितिहेजह्नावपि । जिघ्रतेः० । ओकम्मइ, इमिहइ ;
अपिचारात् मतसब्भराउतमणाइरिमः समाधेयम् ॥

IO– मओविहें जह्नावपि । जिघ्रतेः० । ओकिंहइ, इतिमिहइ ; अपिशब्दात् मतसंवरातमताणाइरिहाणि समाध्येताम् ॥

19 U बसः, ex. पिसइ ; G पिसः ; ex. same as U ; IO पसः ; ex. same as U.

20 B reads चच्छ and रम्ह in place of चच्छ and रम्भ respectively. A has चच्छु and रम्भ for these two words ; UGIO, however, give readings as suggested above. Cf. Var. VII, 68 ( तक्षे रम्पचच्छौ ) ; here बच्छ is probably a scribal error for चच्छ. See also He. IV, 194. Modern Oriya has both चाञ्छ ( चाञ्छिबा ) and राम्प ( राम्पिबा ) in the sense of sharpening.

७. ४९. वाहवासाववाद्गाहिकास्योः

अवादुत्तरयोर्गाहिकास्योर्वाहवासौ वा स्याताम् । ओवाहइ । ओवासइ ॥

७. ५०. सोवसुवौ स्वपेः ॥ १०५ ॥

स्याताम् । सोवइ, सुवइ । वलोपे सोअइ, सुवइ ॥

७. ५१. समो गुपेर्जवो वा स्यात्

संजवइ, संगोवइ ॥

७. ५२. खुंदखुम्मखुलाः क्षुंदेः[21] ।

खुंदइ, खुम्मइ, खुलइ ॥

७. ५३. वृषादीनामुपान्तस्य ऋदेरिः[22] स्यात्

वरिसइ, मरिसइ, हरिसइ ॥

७. ५४. अरोऽन्ततः ॥ १०६ ॥

अन्ते स्थित ऋदरः स्यात् । मरइ ॥

७. ५५. शक्नोतेस्तरचअतीरीः[23]

शक्नोतेस्त्रयः स्युः । तरइ, चअइ, तीरइ । शक्यतेस्तु सक्कइ ॥

७. ५६. लुह रोसाण पुस तु मृंजेः[24] ।

त्रयः स्युः । लुहइ, रोसाणइ, पुसइ । मार्जयतेस्तु मज्जइ ॥

७. ५७. क्षरतेर्झरः[25]

स्यात् । झरइ । पज्झरइ ॥

---

21 B क्षुवेः which is evidently wrong. UAG क्षुदेः; IO क्षुदेः; em' according to UAG; cf. PS. IX. 118. The ex. खुदइ as given by UG IO should be खुन्दइ.

22 UGIO ऋरः (र). The ex. given by UGIO are very corrupt:
U– दतिस्सङ्कः, मउत्सङ्कः, हरित्सङ्कः । G– दतिस्संकः, मथित्संवः, हरित्संक
IO– दतृत्संकः, मसिसंकः, हरिसंशः ।

23 UIO अक्नोतेस्तरतअगराः ; G अक्नोतेस्तराचिअतीचाः ; ex. चिअइ, तिचइ.

24 Here is a specimen to show to what extent Mss. can be corrupt. The Sū. is given as–
UIO– हीहरोभाखापूरोन्तमुकेः । G– वजोलुहरोशाअपूपाः ।
A alone reads it correctly and fully agrees with B.

25 U om. Sū. Ex. very corrupt: क्षरकि परे रकिं ; G क्षरतेर्जचः स्यात् । स्चाकि परेराकि ; I क्षरतिः० क्षरकैपरे रकें ; O झचः for झरः ; otherwise same as I.

७. ५८. ईरयतेः संप्राम्यां सोल्लपेल्लौ स्तः ॥ १०७ ॥

संप्राम्यां सह । सोल्लइ, पेल्लइ ॥

७. ५९. खाधौ च खादिधाव्योः

खादिधाव्योः खाधौ स्याताम् । खाइ । धाइ । चकारात् खाअइ, धाअइ ॥

७. ६०. आतोऽद्वा

धातोराकारादुत्तरे अकारागमो वा स्यात् । जाइ, जाअइ । माइ, माअइ । —'तुह हिअए सुहअ सा अमाअंती' [ = तव हृदये सुभग सा अमान्ती, GS. II. 82 ] । ध्यै-झाइ, झाअइ । गै—गाइ, गाअइ । अङ्गादेशसूत्रेण ( PS. VII. 102 ) ऐत आ स्यात् । राइ, राअइ[26] ॥

७. ६१. नित्यमन्त्यन्त्वोः ।

अन्त्यन्त्वोः परयोः धात्वाकारादकारो[27] नित्यं स्यात् ।— 'वाअंति चेत्ताणिला' [ = वान्ति चैत्रानिलाः, KM. I. 17 ] इति राजशेखरः ॥

७. ६२. स्युः पुञ्छलुञ्छपुड्डाः प्रोञ्छेः

पुंछइ, लुंछइ, पुड्डइ ॥

७. ६३. विलभस्तु खेदेर्यतेः[28] ॥ १०८ ॥

विलभेइ ॥

७. ६४. तुडतोडतुट्टखुट्टास्तुडंतेः[29]

तुडइ, तोडइ, तुट्टइ, खुट्टइ ॥

७. ६५. तवथुअथुवाः स्तौतेः ।

तवइ, थुअइ, थुवइ ॥

७. ६६. छिदिभिदोरन्तो न्दः[30]

स्यात् । अन्त इत्यधिकारः । छिंदइ, भिंदइ ॥

७. ६७. ञ्जो भुजियुज्योः

अनयोरन्तो ञ्जः स्यात् । भुंजइ । पउंजइ ॥

---

26 A adds ठाइ, ठाअइ. 27 UG °त्तवकाराद्° ; IO °वेति त्वकाराद्.

28 U रोदयतेः ; ex. विलभेति ; GIO विलभस्तु रोदयतेः ; ex. विलभेति.

29 A तुडनेः ; G स्फुटयतेः ; UIO तुडर्मेः ; for the correctness of the reading, cf. He. IV, 116.

30 UGIO द्रः; ex. छिद्दइ, भिद्दइ.

७. ६८. निमिश्च नियुजः स्यात् ॥ १०९ ॥

णिमेइ । चकारात् णिउंजइ । एषां त्वादौ रूपान्तराणि प्रकाशितानि (PS. IV. 36) ॥

७. ६९. रुधो म्भन्धौ

रुधोऽन्तो म्भन्धौ स्याताम्[31] । रुंधइ, रुंभइ ॥

७. ७०. क्रथेर्ढः स्यात्

अन्त इत्येव । कढइ ॥

७. ७१. वेष्टतेश्च

अन्तो ढः स्यात् । वेढइ ॥

७. ७२. ल्ल उत्समोः ।

उत्समोरुपपदयोर्वेष्टतेरन्तो ल्लः स्यात् । उव्वेल्लइ । संवेल्लइ । आदेशस्य द्वित्वसिद्धौ द्वित्वापन्नलकारनिर्देशादत्र पादे आदेशस्य द्वित्वं न स्यादिति ज्ञापितम् ॥

७. ७३. मृदो ड्डलौ

मृदोऽन्तो ड्डलौ स्याताम् । मड्डइ, मलइ[32] ॥

७. ७४. शदिपतोर्डः

अनयोरन्तो डः स्यात् । सडइ । पडइ[33] ॥

७. ७५. वृधो ड्ढः

वृधोऽन्तो ड्ढः स्यात् । वड्ढइ[34] ॥

७. ७६. कृषेर्न वा ।

कृषेरन्तो ड्ढो न वा स्यात् । कड्ढइ[35], करिसइ ॥

७. ७७. ज्झो बुद्ध्यादेः

बुद्ध्यादेरन्तो ज्झः स्यात् । बुज्झइ । सिज्झइ । सुज्झइ । जुज्झइ । आरज्झइ । गृधु गिज्झइ । बुज्झिरो, बुज्झाविओ ॥

---

31 B om. this sent. A supplies this. UI रुधो रन्तो० ; G also om. the sent. and adds स्याताम् to the rule.

32 G wrongly inserts मन्द्यतीन्वत्र. 33 UIO duplicate ड in ex. ; G reads ड fof ड. 34 B ड्ढ for ड्ढ in this case as elsewhere.

35 The same em. here too over B in respect of ड्ढ.

७. ७८. **कृतेड्डः**

कृन्ततेरन्तड्डः स्यात् । कड्डइ ॥

७. ७९. **ञ्चो व्रजिनृत्योः**[36]

अनयोरन्तश्चः स्यात् । वच्चइ । णच्चइ ॥

७. ८०. **रुदो व्ववौ ॥ ११० ॥**

रुदोऽन्तो व्ववौ स्याताम्[37] । रुव्वइ, रुवइ । अत्त्वादेशे रोवइ । वलोपे रोअइ, रुअइ ॥

७. ८१. **ज्जश्चोद्विजेः**

उद्विजेरन्तो[38] ज्जः स्यात् । उव्विज्जइ । चकारात् व्ववौ च । उव्विव्वइ, उव्विवइ । पूर्ववत् उव्वेवइ, उव्विअइ, उव्वेअइ ॥

७. ८२. **हनिखनोर्मो वा**

अनयोरन्तो मो वा स्यात् । हम्मइ, हणइ । खम्मइ, खणइ ॥

७. ८३. **रुष्यादिषूद्दीर्घः ।**

स्यात्[39] । रूसइ । तूसइ । दूसइ । सूसइ । पूसइ ॥

७. ८४. **शकिलग्योर्द्विः**

अनयोरन्तो द्विः स्यात् । सक्कइ । लग्गइ ॥

७. ८५. **शम्यादीनां वा**[40]

अन्तो द्विर्वा स्यात् । उअसम्मइ, उअसमइ । तम्मइ, तमइ । भम्मइ, भमइ । चल्लइ, चलइ । णड्डइ, णडइ । फुड्डइ, फुडइ । शम्यादिराकृतिगणः ॥

७. ८६. **मीलतेः प्रादेः ॥ १११ ॥**

प्रादेरुत्तरस्य मीलतेरन्तो द्विर्वा स्यात् । पमिल्लइ, पमीलइ । णिमिल्लइ, णिमीलइ । प्रादेरिति किम् । मीलइ ॥

---

36 UGA om. this rule; IO retain but in a very corrupt form : येव्रति निस्योः । अनयोरंतत्तः स्यात् । त ( व in O ) तइ ; अतइ ॥

37 BUIO स्यात्, but cf. Sū. 73 comm.

38 G अत्पूर्वात् विजेः.

39 UGIO विषु दीर्घः ; B excludes स्यात् from Sū. and includes it in comm.

40 UIO तं वा० ; G intermingles Sū. and comm.

७. ८७. **हुश्रुजिलूधूञ्भ्यो णः पूर्वो ह्रस्वश्च**

एभ्यो णकारागमः स्यात्, पूर्वो ह्रस्वश्च । हुणइ । सुणइ । जिणइ । लुणइ । धुणइ ॥

७. ८८. **हुअहुवौ च हुवः ।**

जुहोतेः स्थाने हुअहुवौ स्याताम् । हुअइ, हुवइ, हुणइ ॥

७. ८९. **क्त्वादौ श्रुवो वा**

क्त्वातुमुन्तव्येषु श्रुवो णागमो वा स्यात् । सुणिऊण, सोऊण । सुणिउं, सोउं । सुणिअव्वं, सोअव्वं ॥

७. ९०. **जअश्च जेः**

जेः स्थाने जअश्च स्यात् । जअइ, चकारात् जिणइ, अत्रापि क्त्वादिपक्षे णो वेत्यनुवर्तते । जेऊण, जिणिऊण । जेउं, जिणिउं । जेअव्वं, जिणिअव्वं ॥

७. ९१. **लुनातेरुदो लुवः ॥ ११२ ॥**

उदो लुनातेर्लुवः स्यात् । णागमापवादः । उल्लुवइ ॥

७. ९२. **क्त्वादौ लवो वा**

क्त्वादौ परे लुनतिर्लवो वा स्यात् । लविऊण । लविउं । लविअव्वं । उल्लविऊण । उल्लविउं । उल्लविअव्वं । एवं पक्षे लुणिऊण । उल्लुविऊण इत्यादयः [४३] ॥

७. ९३. **धूञो धुअधुवौ**

वा स्याताम् । धुअइ, धुवइ, धुणइ ॥

७. ९४. **के पुनर्न ते ।**

के परे पुनस्ते णागम आदेशाश्च न स्युः । ह्रस्वत्वं स्यादेव । हुअं । सुअं । जिअं । धुअं । उलुं ॥

---

41 G inserts चकारात् which seems to be appropriate in the present context.

42 B has simply क्त्वादौ° in place of क्त्वादिपक्षे णो° which is clearly written in G. UIO retain the reading of G in most corrupt form.

43 UG add उल्लुणिऊण to ex.

७. ९५. यक्तोर्व्वो वा

एषां यकः स्थाने व्वो वा स्यात् । हुव्वइ । सुव्वइ । जिव्वइ । धुव्वइ । लुव्वइ । अनभिधानादत्र णागमादयो न स्युः । पक्षे हुणिज्जइ, सुणिज्जइ इत्यादयः ॥

७. ९६. ग्रहेर्गेण्हहिन्दौ[44]

स्याताम् । गेण्हइ, हिन्दइ ॥

७. ९७. क्त्वादिषु घे न वा ॥ ११३ ॥

क्त्वादिषु ग्रहेर्घे न वा स्यात् । घेऊण । घेउं । घेअव्वं । पक्षे गेण्हिऊण, हिंडिऊणँ[45] ॥

७. ९८. बुड्डखुप्पौ मज्जतेः स्याताँ[46]

बुड्डइ, खुप्पइ ॥

७. ९९. रन्धो राधयतेः स्मृतः ।

रंधइ ॥

७. १००. एवमितरेऽपि वेद्याः

इतरे धात्वादेशाः । धावु धोअइ[47], अपक्रमयति खुडुक्कइ[48], आभाषते अप्पाहइ । स्वदते चक्खइ । उत्तंभयति उत्तंघइ । छादयति आक्कामयति । झंपेइ, इत्यादयो यथादर्शनम् । केचिदादेशाः क्वचित् कुँति[50] न भवन्ति । यथा— भावओ, कारओ, कअं, करणिज्जं इत्यादयः ॥

---

44 B हिन्दौ, ex. हिन्दइ ; U हिनै, ex. हिन्वइ ; IO गेण्वहित्वौ, ex. गेण्वइ हिन्वइ ; G हिन्वो, ex. हिन्वइ. A retains the reading of B which seems to be correct. Mss. often confuse न्द with न्व or न्य which is due to the way of writing in Oriya script by the scribes. Dr. Ghosh has uunecessarily emended the rule of Pu. VIII, 8 to ग्रहेर्गेण्हहिण्णौ, in spite of the reading of Ms हिन्दौ in place of हिण्णौ. See PK P. 161, footnote 8.

45 B हिन्दऊण; G हिन्दिउण; U हिन्दिउण; IG गेण्विऊण, हिन्विऊण.

46 G स्याताम्, but this reading, if accepted, would give rise to the violation of metrical discipline.

47 G धावो धूअइ; UIO धावू धोअइ.

48 U अप० खुडु०; A अपक्कमेति; I अपक्क इति; O खुडुक्कमति.

49 UIO चक्खइ; G चक्कमयति, A om. 50 G क्वापि.

७. १०१. शेषाणां स्यादन्तत्वम् ॥ ११४ ॥

उक्तादन्ये शेषाः । हसे हसइ, त्रसी तसइ, रमइ, चोरइ, चिंतइ, कारइ, पाढइ, वड्डुई इत्यादि । ऊह्या अ॑म्ये ॥

७. १०२. अङ्कादेशा बहुलम्

धातूनामचामङ् आदेशाश्च बहुलं स्युः । अङ् यथा च्छिवेइ[52] च्छवइ धिप्पइ, धुप्पइ, मुअइ मोअइ, रुवइ रोवइ, आरुहइ आरोहइ, लिहइ लेहइ इत्यादौ विकल्पः । णेइ देइ जेमइ, गिज्झइ[53] राइ भोई । एवं गै गाइ । त्रैङ परित्ताइ । वच वोत्तुं, वोत्तूण, वोत्तव्वं[56], अत ओत् । रोत्तुं, रोत्तूण, रोत्तव्वं । भेत्तुं, भेत्तूण, भेत्तव्वं[57] । छेत्तुं, छेत्तूण, छेत्तव्वं । सोत्तुं, सोत्तूण, सोत्तव्वं । मोत्तुं, मोत्तूण, मोत्तव्वं । अङ् नित्यं द्वित्वं च यथादर्शनम् । आदेशाश्च होइ, हुवइ तूरई[58] तुवरइ, इत्यादौ नित्यम् । ओवाहइ, ओगाहइ, ढक्कइ[59], ओत्थइ, थअइ, संजवइ, संगोवइ, इत्यादौ विकल्पः । उक्तादन्येऽपि । तिष्ठति थक्कइ । – 'आअअ-विथक्कंतं [ = आगतवितिष्ठमानम् R. III. 4 ] इति सेतुः । उपनयति– 'पणामेइ मणिं' [=उपनयति मणिं R. I. 39 ] इत्यादयो द्रष्टव्याः ॥

७. १०३. रेहो वा राजतेः

वेत्यधिकारः । रेहइ, राजइ ॥

---

51 B वड्डइ; U वड्डुइ; IO पढइ; G ढड्डइ; A om.

52 B ऊहअइ (?) इत्यादि; UIO ऊहअन्या इत्यादि; G ऊहअन्या इत्यादि; A om. Em. is mine. Mss. including B seem to have confused with regard to the actual reading as has been suggested.

53 UIO छि( छु in U )वइ; G छुवइ.

54 BUGIO गोत्झइ; A om. The mode of writing Oriya letter ज often appears like ग in Oriya script. So also the quick writing of Oriya letter झ causes the cofusion of Oriya letter ख. So it is very likely that the actual word is गिज्झइ; also cf. He. IV. 217. Em. is mine.

55. B अग्गव्भाइ (!); U भाइ । भोइ; GIO भाइ । रोइ. All these are evidently corrupt and the reading as suggested above seems to be the correct one.

56 This word lacking in B is found in UGIO. IO वोत्तव्वं; G वेत्तव्वं.

57 B reads भोत्तुं, भोत्तूण, भोत्तव्वं with which Mss. do not agree.

58 B & Mss. तुरइ. 59 B थक्कइ; Mss. तक्कइ.

७. १०४. त्यजश्छड्डः ।
छड्डइ चअइ ॥

७. १०५. पुलनिअनिअच्छजोवअवक्खपुलोअपुलआ दृशेः सप्त ॥११५[60]
पुलइ, निअइ, निअच्छइ, । निपातनसामर्थ्यान्न णत्वम् । जोवइ, अवक्खइ, पुलोअइ, पुलअइ । पस्सइ इति संस्कृतात् ॥

७. १०६. दंसो णिङि
णिङि परे दृशेर्दंसो वा स्यात् । दंसेइ दरिसेइ । दंसाविइ, दरिसावेइ । दावश्चेति शाकल्यः । दावेइ[61] ॥

७. १०७. आयो यो लोपः
आयप्रत्ययस्य यस्य लोपो वा स्यात् । धूमाइ, धूमाअइ ।— ' धूमाइ सिही ण पज्जलइ ' [ = धूमायते शिखी न प्रज्वलति, GS. I. 14 ] ॥

७. १०८. बिन्दुर्मुचादेः स्यात् ।
बिन्दुरागमः । मुंचइ, मुअइ । लुंपइ, लुअइ । लिंपइ, लिअइ ॥

७. १०९. वेर्घटतेर्विञ्छिः[62]
स्यात् । विंछेइ, विहडेइ ॥

७. ११०. उदा णिङयोग्घः
णिङि परे उदा सह घटतेरोग्घः स्याद्वा । ओग्घेइ, उग्घडेइ ॥

७. १११. विचरतेर्वीणः[63] ॥ ११६ ॥
णिङि विचरतेर्वीणः स्याद्वा । वीणेइ, विआरेइ ॥

७. ११२. कृञः कुणः स्यात्
णिङीति निवृत्तम् । कुणइ, करइ[64] ॥

७. ११३. का नित्यं तिङि भूतभविष्यतोः ।
भूतभविष्यतोर्विहिते तिङि परे कृञः स्थाने नित्यं का भवति ।

---

60 U पुलउपनिअअ०; IO पुलभिपनिछअ०; G पुलनिपानिअ०; A पुल लिअनिअछ०; UGIO also read towards the end of Sū. आदेशाः सप्त स्युः.

61 A adds this portion to comm. which though not authorised by Mss. as well as by B, is very significant addition to the text and there is every reason to take it as authentic; cf. Bt. I. 8, 24; also PSM. P. 461. 62 UGIO विञ्छेः.

63 A विरचतेः; so also in comm. 64 UGIO कुरइ.

काहीअ । काहीइ ।

७. ११४. क्त्वादौ च

नित्यं कृञः का स्यात् । काऊण । काउं । काअव्वं ॥

७. ११५. घोट्टः[65] पिबतेः

घोट्टइ । पिअइ इति संस्कृतात् ॥

७. ११६. अस्तेरच्छः

स्यात् । अच्छइ । अत्थि इति[66] संस्कृतात् ॥

७. ११७. लसो ल्हसः ॥ ११७ ॥

ल्हसइ, लसइ ॥

७. ११८. नेः सहतेः सुढः[67]

णिसुढइ, णिसहइ ॥

७. ११९. अपेनौअल्लः स्याद्वृतेः

अपेन सह वर्ततेरोअल्लः स्यात् । ओअल्लइ, ओवट्टइ । बाहुल्यात् अवट्टइ ॥

७. १२०. उदोल्लट्टः ।

उदा सह वृतेरुल्लट्टः स्यात् । उल्लट्टइ, उव्वट्टइ ॥

७. १२१. पर्यस्यतेस्तु पल्लट्ट खुज पल्लत्थ इत्येते ॥ ११८ ॥

स्युः[68] । पल्लट्टइ, खुज्जइ, पल्लत्थइ । पक्षे पल्लस्सइ ॥

७. १२२. चोरेस्थणिल्लः

स्यात् । थणिल्लइ, चोरेइ ॥

७. १२३. उद्ग्रहेरोग्गाहः[69]

स्यात् । ओग्गाहइ, उग्गाहइ ॥

७. १२४. लुठेर्लोट्टः ।

स्यात् नित्यम् । लोट्टइ ॥

---

65 UIO insert इ ( इः in IO ) after घोट्टः ( -टः in IO ).

66 U अत्थु इति; G अत्थेनि; IO अत्थुति.

67 B सुढः; U सुढः; I सुचः; O सुरः; G सिच; em. according to U; cf. He. IV, 158.

68 In Sü. UGIO read खुज्ज. Mss. include स्युः in Sü.

69 A उद्ग्राहेः, G उदो ग्राहेः.

७. १२५. गुञ्जोल्ल[70]पण्णाडपरिहट्टा विलुलेर्मताः ।
गुंजोल्लइ, पण्णाडइ, परिहट्टइ, विलुल्लइ[71] ॥

७. १२६. खिदेर्विसूरः
स्यात् । विसूरइ, खिज्जइ ॥

७. १२७. खौनातेः खउरः
स्यात् । खउरइ, खऊँइ[72] ॥

७. १२८. लडतेर्मुरः ॥ ११९ ॥
स्यात् । मुरइ, ललइ ॥

७. १२९. लालप्पलालम्पलालम्भलालम्भा विना लपेः[73] ।
विना सह लपतेरिमे स्युः । लालप्पइ, लालंपइ, लालम्भइ, विलवइ ॥

७. १३०. कुवेर्जूरः[74]
स्यात् । जूरइ, कुज्झइ ॥

७. १३१. कथेः साहः
स्यात् । साहेइ, कहेइ ॥

७. १३२. ओग्गहः स्यात् प्रतीच्छतेः[75] ॥ १२० ॥
ओग्गहइ, पडिच्छइ ॥

७. १३३. क्वण ओङ्गणः[76]
ओंगणइ, कणइ ॥

७. १३४. क्रमेर्वोलाइञ्चौ
स्याताम् । वोलइ, आइंचइ, कमैइं[77] ॥

---

70 G गुञ्जले; A गुञ्जेल्ल; BU गुञ्जोल्ल; IO गुंजेलुं, ex. गुंजेलुइ.

71 New addition by A. 72 A खंणइ.

73 This Sū is very corrupt in Mss. excepting UA which alone give a faithful reading;

IO – लाइप्पला इमला इम्बला इंमा विना कथेः ।
U – लालप्पलालमलालम्भलालम्भा विना लपेः ।
G – लाप्पलालम्वलालम्भलालम्भुविलम्बा लपः ।

A is in agreement with B.

74 A जुरः 75 G उग्गहः ; ex. उग्गहइ.

76 BA ओङ्गणः ; U ओङ्गवणा; G ओङ्गुण; IO ओङ्गवणः.

77 This is an additional ex. according to UGIAO.

७. १३५. रम्प अप्पण्ण।
अहिसाअक्का

आक्रा सह क्रमतेरिमे स्युः। रम्पइ, अप्पण्णइ, अहिसाअइ, अक्कमइ॥

७. १३६. रुह उल्लुढवलग्गचुंपाः स्युः॥ १२१॥

आहेत्येव। उल्लुढइ, वलग्गइ, चुंपइ, आरुहइ॥

७. १३७. भ्रमतेर्ढुण्ढुल्लः स्यात्

ढुंढुल्लइ।– 'ढुंढुल्लंतो मरिहिसि' [= भ्रमन् मरिष्यसि, KP. X. SL. No. 407]

७. १३८. णुमज्ज शीङः

शीङो णुमज्जः स्यात्। णुमज्जइ॥

७. १३९. शुषेस्तु वसुआअः।

स्यात्। वसुआअइ, सूसइ॥

७. १४०. आगम आहम्माजत्थौ[80]

स्याताम्। आहम्मइ, आजत्थइ। आअच्छइ इति संस्कृतात्॥

७. १४१. छादेर्नूमझम्पौ स्तः॥ १२२॥

नूमइ, झंपइ, छाएइ॥

७. १४२. पिअरञ्जवेमपरिरञ्जा भञ्जेः

त्रयः स्युः। पिअरंजइ, वेमइ, परिरंजइ, भंजइ॥

७. १४३. उन्नदेर्वोक्कः।

स्यात्। वोक्कइ, उण्णअइ। उन्नटेरिति कश्चित्॥

78 B चम्पाः; Mss. however, show that it should be चुम्पाः. Cf. A चुम्पाः; UIO चुमाः; G चुप्फा.

79 B ढुण्ढुल्लसि; em. according to Mss.

80 G om. this Sū.

81 U °न्नुमसम्पौ०; ex. सम्पइ; G °न्नुमसखौ०; ex. सम्फइ; IO छादे-र्नुमझम्पौ०; ex. झमइ; A छादेर्नुम.

82 G includes this in Sū. which being done, metrical discipline is violated.

७. १४४.  फंसालुंगौ[83] स्पृशतेः
स्यात् । फंसइ, आलुंगइ ॥

७. १४५.  उपगूहेरावआसः स्यात् ॥ १२३ ॥
आवआसइ, उवऊहइ ॥

७. १४६.  विरचेर्विहिविल्ल स्यात्
विहिविल्लइ, विरएइ ॥

७. १४७.  पप्फोडः प्रस्फुटेः[84]
स्यात् । पप्फोडइ, पप्फुट्टइ[85] ॥

७. १४८.  तिमेस्तिण्णः ।
तिण्णाअश्च
स्याताम् । तिण्णइ, तिण्णाअइ, तिम्मइ ॥

७. १४९.  प्राद्विशतेर्डुक्कः स्यात्[86]
डुक्कइ, पइसइ ॥

७. १५०.  परेर्विआलः स्यात्[87] ॥ १२४ ॥
परेरुत्तरस्य विशतेर्विआलः स्यात् । परिविआलइ, परिविसइ ॥

७. १५१.  चर्वेश्चप्पः स्यात्[88]
चप्पइ, चव्वइ ॥

७. १५२.  खदतेश्चक्खः
स्यात् । चक्खइ, सअइ ॥

७. १५३.  पृच्छतेः पुच्छः ।
स्यात्[89] ।= ' पुच्छिओ णु पउत्ति ' [ = पृष्टो नु प्रवृत्तिम्, R. I. 40 ] ॥

---

83 B °लुह्वो° ; U लुह्मचोद् विशतेः ; G ढमालुम्भ्योद्दिशतेः ; IO पसालुंम्बो-हिषतेः ; however, the readings of Mss. show that the word in question is not लुह्व as given by B; hence em.

84 G रस्फोडः, A रम्फोडः ; I रांपोतः ; O एपोतः.

85 O रिप्पट्टइ ; I रिप्फटइ ; A पप्पुट्टइ ; U रिप्फट्टइ ; O रिफटइं.

86 B brackets this word but this is included in Sū. in Mss.

87 UGIO exclude this from Sū.

88 G चोर्वेर्चप्पः स्यात् ; ex. चव्वइ, चप्पइ ; A चर्वेर्चप्पः स्यात्, ex. चप्पइ, चव्वइ ; IO चर्वेर्वप्फः स्यात्, ex. चव्वइ, चप्पइ ; U tallies with B.

89 B unlike UGIO excludes this from Sū.

७. १५४. जागर्तेर्जग्गः स्यात्

जग्गइ ।

७. १५५. प्रतेरिणः पत्तिआअः स्यात् ॥ १२५ ॥

पत्तिआअइ । अत्र सूत्रत्रये नित्यो विधिः ॥

७. १५६. उण्णालथङ्गगुलुगुञ्छा उन्नामेः[90]

उन्नामेरिमे त्रयः स्युः । उण्णालइ, थंगइ, गुलुगुंछइ, उण्णामेइ ॥

७. १५७. त्रसेर्वज्जः ।

वज्जइ, तसइ ॥

७. १५८. प्रतिपालयतेश्चिरमालविरीहौ[91]

स्याताम् । चिरमालइ, विरीहइ, पडिवालेइ ॥

७. १५९. चुरमुम्मुरौ चूर्णेः ॥ १२६ ॥

स्याताम् । चूरइ, मुम्मुरइ, चुण्णेइ ॥

७. १६०. तिक्खालस्तेजयतेः

तिक्खालइ, तेजइ ॥

७. १६१. उब्बुह उत्क्षुभ्यतेः[92]

उब्बुहइ, उक्खुब्भइ ॥

७. १६२. ठवः स्थापेः ।

ठवइ, ठावइ ॥

७. १६३. उत्स्तृञ ओत्थल्लोत्थल्लौ

उदिति लुप्तपञ्चम्यन्तम्[93] । स्याताम् । ओत्थल्लइ, उत्थल्लइ, उत्थरइ ॥

७. १६४. वेरिल्लः

वेरुत्तरस्य स्तृञो रिल्लः स्यात् । विरिल्लइ, वित्थरइ ॥

७. १६५. स्फुरश्चुलुचुलैः स्यात् ॥ १२७ ॥

चुलुचुलइ, फुरइ ॥

---

90 G °थग्गं० उद्धमेः; ex. थग्गइ; I थंगु०; O थंखु०; A ०थंख०.

91 UGIO विराहउ; ex. विराहइ; O विराहइ.

92 BUGIO °इत्यभ्यतेः; A om. Em. is mine, for this is in accord with the second ex.

93 G °सप्तम्यन्तम्.

94 U चुलचुलः, also ex. चुलचुलइ; G फुलः; ex. फुलइ, फुरइ; IO चुलचुलः; ex. चुलचुलइ; A agrees with B.

७. १६६. म्भसफिट्टौ भ्रंशेः[95]
स्यातां । म्भसइ, फिट्टइ, भस्सइ ॥

७. १६७. प्रसरतेः पअल्लः
स्यात्[96] । पअल्लइ, पसरइ ॥

७. १६८. छिवच्छुपतेः ।
छिवइ, छुअइ ॥

७. १६९. विकसेस्तु विहसवोसट्टविसट्टाः
स्युः । विहसइ, वोसट्टइ, विसट्टइ, विअसइ ॥

७. १७०. तिड्डवस्ताडेः[97] ॥ १२८ ॥
ताडयेस्तिड्डवः स्यात् । तिड्डवइ, ताडेइ ॥

७. १७१. प्रादेर्धात्वादिर्द्विः
वेत्येव । प्रादेरुत्तरो धात्वादिर्द्विः स्यात् । पवाअइ, पव्वाअइ । परिभमइ, परिब्भमइ ॥

७. १७२. गम्यादीनां यकान्तोऽपि ।
गम्यादीनाम्[99]न्तो वर्णो यका सह द्विर्वा स्यात् । गम्मइ । रम्मइ । लब्भइ । पक्षे गमीअइ, गमिज्जइ, इत्यादयः ॥

७. १७३. कृञ्[100]हृञोस्तु कीरहीरौ
कृञ्हृञोर्यका सह कीरहीरौ स्याताम् । कीरइ । हीरइ । करिज्जइ । हरिज्जइ[101] ॥

७. १७४. तीरस्तॄशक्नुवोः
तरतेः शक्नोतेश्च यका सह तीरः स्यात् । तीरइ, पक्षे तरिज्जइ, सक्कइ ॥

७. १७५. छुपश्छिप्पः[102] ॥ १२९ ॥
छुपतेर्यका सह छिप्पः स्यात् । छिप्पइ । गम्यादित्वात् छुप्पइ । पक्षे छविज्जइ । बाहुलकात् यका विनापि छुविज्जइ ॥

---

95 B म्हस॰; UG म्भस॰; IO मस॰; A म्भम॰; em. according to Mss.   96 G includes this in Sū.

97 G ताडयतेः.

98 UGIAO add वा here which is superfluous since वेत्येव is already there in comm.   99 UGIO शिथिलग्रहणीयानाम्.

100 B कृञ्ञो, em. after Mss.

101 G adds क्रियते ह्रियते इत्यनयोरिदं रूपम्.   102 B च्छुपः.

७. १७६. दुहलिहवहतीनां दुब्भलिब्भवुब्भाः

यका सह स्युः । दुब्भइ । लिब्भइ । वुब्भइ । पक्षे दुहीअइ, दुहिज्जइ इत्यादि ॥

७. १७७. दृशेर्दीसः ।

यका सह स्यात् । दीसइ, पक्षे पुलीअइ इत्यादयः ॥

७. १७८. स्युर्घेप्पगेज्झघेज्झा ग्रहेः

यकेत्येव । घेप्पइ, गेज्झइ[103], पक्षे गेण्हीअइ हिन्दीअइ ॥

७. १७९. कथेः सासणवरिज्जौ[104,105] ॥ १३० ॥

यका सह स्याताम् । सासइ, णवरिज्जइ[106], साहीअइ, कहीअइ ॥

७. १८०. ज्ञो णज्जणव्वौ[107] इत्येतौ

यका सह स्याताम् । णज्जइ, णव्वइ, जाणीअइ, मुणीअइ ॥

७. १८१. दादीनां च दिज्जाद्याः ।

दादीनां यका सह दिज्जाद्याः स्युः । दा दिज्जइ, पा पिज्जइ[108], गै गिज्जइ । णीङ् णिज्जइ, डीङ् उड्डिज्जइ, लीङ्, लिज्जइ इत्यादयो नित्यम् ॥

७. १८२. क्तेन रुदादे रुण्णाद्याः

क्तेन सह रुदिप्रभृतीनां रुण्णाद्याः स्युः । रुद् रुण्णं । दा दिण्णं । भिण्णं । छिण्णं । दुह् दुब्भं । जूजुण्णं । प्रवस् पउत्थं[109] । आश्लिष् आलिद्धं । मुच्लृ मुक्कं । दंश डक्कं । छुप स्पृश् छिक्कं छित्तं । लिप लित्तं । लुप्पं[110] लुत्तं । क्रमु

---

103 UGIO om. 104 U हिल्याअइ, G णद्धाअइ; I हिन्याअइ (?); O हिय्यांअइ; A agrees with B correctly. 105 G अवरिज्जउ.

106 UGIO अवरिज्जइ; evidently here अ is in confusion with ancient Oriya letter ण which was written exactly like अ with oblique or horizontal stroke inside it.

107 U णब्ज; G दाव्व; IOA same as B.

108 O om. 109 UGIO तत्थं.

110 BUI insert लुप्पं here; G लुप्प; A om.; B puts '(?)' after word. In fact it has no bearing on the rule. Most probably in original Ms. the word was written twice in confusion with the following word लुप; G actually reads लुप as by the side of लुप्प. Hence I have omitted the word.

वोलीणं । उद्गम उल्लिअं[111] । दुद्धं[112], लित्तं, लुत्तं[113], जिण्णं, पवसिअं, उग्गअं[114], इत्यादयस्तु संस्कृतात् । कृष्णादिराकृतिगणः ॥

७. १८३.    प्रागादेशभेदाश्च ॥ १२१ ॥

प्रागुक्ता आदेशभेदाश्च क्तेन सह स्युः । विसट्टं, वोसट्टं । वक्खुआअं, चुक्कं[115] इत्यादि यथादर्शनम् ॥

इति श्रीमार्कण्डेयकवीन्द्रकृतौ प्राकृतसर्वस्वे भाषाविवेचने

महाराष्ट्र्यां धातुपरिणतिः सप्तमः पादः ॥ ७ ॥

---

111 U उग्गिम उल्लिअं; G उग्गम उल्लिअं; IO उर्जमउल्लिअं; B उल्लुअं.

112 B दुद्धं which no Ms. authorises; U clearly reads दुद्धं; I दुद्धं.

113 Mss. om. A om. the rest of comm. after आक्खित्त etc.

114 BUGIO उग्गअं; but this word has no connection whatsoever with words discussed, and the word suggested by me being a derivative of Skt. उद्गतम् corresponds to उद्गम उल्लिअं already discussed above as an exceptional case coming under this rule.

115 G चुक्कं; IO चुक्कं; Mk., however, has nowhere discussed this word previously. This Pkt word is synonymous with Skt भ्रष्टम्.

## अष्टमः पादः ।

अथाव्ययनिपाताः—

**८. १. हुं[1] दाने वारणे प्रश्ने स्मृतौ**

क्रमेण यथा – 'हुं गेण्ह एदं सुवण्णं' [= हुं गृहाण एतत् सुवर्णम्] । –'हुं गाइं पाएण छिवेसि[2] [= हुं गां पादेन स्पृशसि] । – 'हुं जप्पेसु[3] अस्स संदेसं [= हुं जल्प अस्य संदेशम्] । – 'हुं सो एस जणो' [= हुं स एष जनः] ॥

**८. २. हु क्खु खु निश्चये ।**

**संभावने वितर्के च**

क्रमेण यथा — 'तह वि हु से णत्थि जीविए आसंघो' [= तथापि खलु नास्ति जीविते आसंगः, R. I. 15] ।

'जं खु अवेक्खसि तुमअं कुडिलकडक्खद्धमेत्तएणं पि ।
तक्खणपरिढत्तमणा ण खु सा सुमरेइ जीविअव्वं पि[4]' ॥
[= यत् खलु अवेक्षसे त्वं कुटिलकटाक्षार्धमात्रेणापि ।
तत्क्षणपरिरब्धमनाः न खलु सा स्मरति जीवितव्यमपि ॥]

---

1 B हूं but Mss. हुं ; cf Bhām; IX. 2,

2 BG च्छिवनि. 3 UGIO जमसु.

4 This verse is very corrupt in Mss.—

U जं क्खु अवंक्खसि तुमअं कुत्तलइत्तकितुक्खद्धमेउएनापि ।
तक्खणपरिढत्तमणा णहु सा सुमरेइ जीविअव्वं णि ॥

G जं क्खुणव्वक्खसि तुमअं कुन्तलइंउकितुक्खत्थमेभयेणपि ।
उक्खणपरिउत्तमपापहुसा सुमरेइ जीविअग्ग ।णि ॥

IO agree with U with the following difference—
°तुमअं कुडिलइतर्कितुक्खद्धमेभएतापि ।
उक्खणपरिवत्तमपापहुसा° जिवि° ;

A agrees with B with the following difference—

अवक्खसि for अवेक्खसि; कडख for कडक्ख and ओमेउएणं for मेत्तएणं; तक्कण for तक्खण; हु for खु; चिविभवं for जीविअव्वं.

८. ३.    णाइ माइ अलाह्मण ॥ १३२ ॥
निषेधार्थाः

एते चत्वारः ।

'अण अग्गिं गेण्ह करे, सप्पं छिव माइ पाएहिँ ।
णाइ खले वीसंभसु, अलाहि जूरावसु तवस्सिं'[5] ॥

[= मा अग्निं गृहाण करेण सर्पं स्पृश मा पादाभ्याम् ।
मा खले विश्रम्भस्व मा वञ्चय तपस्विनम् ॥ ]

८. ४.    उपालम्भे समाशौ त्तिरितेर्भवेत् ।

इतिशब्दस्य—

'पढुमं जिविअसरिच्छा तत्तो सुहवी तदो पुणो घरिणी ।
चंडि त्ति भणसि एण्हिं ण मुणमि काहे हुवेज्ज चामुंडा ॥'[6]
[= प्रथमं जीवितसदृक्षा ततः सुभगा ततः पुनः गृहिणी ।
चण्डि इति भणसि इदानीं न जानामि कदा भवेयं चामुण्डा ॥ ]

इदं मम[7] । – 'दिट्ठ त्ति ण सद्दहिअं' [= दृष्ट इति न श्रद्धितम्, R.I. 38 ] । अन्यत्र – 'इअ पढुमं महुमासो' [= इति प्रथमं मधुमासः, Ra. I. 16 ] ॥

८. ५.    ओ सूचनावितर्कानुतापप्रकोपविस्मये ।

—'ओ[9] सहि को एस महावीलआणिअडे' [= ओ सखि क एष माधवी-

---

5 The last two words of this verse are written by Mss. as follows :—

U कुसविसुत्ति वह्निम् ;    G कुसवसुत्त वस्या: ;
IO कुसवंसुन वश्मां ( वस्तां in O ); A tallies with B.

6 The following variants with regard to the verse are noticed:

U    परमतिर्विअ० गुणो अरिणी ।
     ०एहिँ ङ्गण मुण्णामि० दुवेज्ज णमुण्डा ॥
G    परमतिविअ० तह्योगुणो अरिणा ।
     चण्डिभूत्तुणासिधर्हिङ्गण मुण्डाय० दुवेज्ज णमुण्णा ॥
IO   परमंतिः० तत्तो गुणो अरिणा ।
     चंडिर्त्ति तुणासि पहिँ लुणमु उमिकाह (हे in O) दुवेज्ज णमुंडा ॥
A भणसुसि for भणसि and णमुंडा for चामुंडा.

7 UIOG इदमस्म.    8 UGI read this word as परमम्, O परम॰
9 UGIO definitely in confusion with the ओ letter in Oriya.

लतानिकटे ] ।—'कुमरा सामलगोरा ओ एए रामलक्खणा व्व दीसंति' [ = कुमारौ श्यामलगौरौ ओ एतौ रामलक्ष्मणौ इव दृश्येते ] । — 'ओ मइ दुग्गहिलाए ण पेच्छिओ पाअपडिओ वि' [ = ओ मया दुर्ग्रहवत्या न प्रेक्षितः पादपतितः अपि ] ।— 'ओ ण भवणं पुणो वंचसि' [ = ओ न भवनं पुनः व्रजसि ] ।— 'ओ भग्गो हरचावो सिसुणा पुत्तेण दहरहस्स' [ = ओ भग्नः हरचापः शिशुना पुत्रेण दशरथस्य ॥ ]

**८. ६. उं क्षेपे विस्मये खेदे वितर्के सूचने तथा ॥ १३३ ॥**

— 'उं णिल्लज्ज समोसर' [ = उं निर्लज्ज समपसर, R. V. 49 ] — 'उं वड्डिमा थणभरस्स' [ उं वृद्धिमा स्तनभरस्य ] ।— 'उं कह ण समागओ किदवो' [ = उं कथं न समागतः कितवः ] ।— 'उं[11]' सहि को एस दीसइ लअंतरिओ [ = उं सखि क एष दृश्यते लतान्तरितः ] ॥

**८. ७. नन्वर्थोपमयोर्णं स्यात्**

— 'णं भणामि किं लिहसि त्ति' [ = ननु भणामि किं लिखसि इति ] । – 'णं चंदो तुह वअणं' [ = ननु चन्द्रः तव वदनम् ] ॥

**८. ८. हद्धि खेदानुतापयोः ।**

—'हद्धि णागआ पिअसही' [ = हा धिक् नागता प्रियसखी ] ।— 'हद्धि पाअपडिओ वि णिट्ठुरं भणिओ' [ = हा धिक् पादपतितोऽपि निष्ठुरं भणितः ] ॥

**८. ९. अंतो संतो च मध्यो[12]र्थे**

— 'घरस्स अंतो वसइ' [ = गृहस्यान्तः वसति ] । एवं संतो ॥

**८. १०. हो[13] स्यादामन्त्रणार्थकम् ॥ १३४ ॥**

– हो बम्हण एहि' [ = भो ब्राह्मण एहि ] ॥

---

10 U ०वि० नि भइमं गुणो बिच्छसि ; IO ओणिव इमं गुणो बिच्छसि; G ओणिभइ मग्गणोमिच्छसि; A om.

11 B हुं which is not admissible in the present context.

12 A °थो.

13 BA भो, ex. भो, but UGIO read हो in these cases; see also PSM. p. 951.

८. ११. णवरं[14] तु केवले स्यात्

—'णवरं गहिओ वि हरधणू भग्गो' [= केवलं गृहीतमपि हरधनुः भग्नम् ] ॥

८. १२. णवर च

चकारात् केवले । —'णवर दइअं गआ दिट्ठी' । [= केवलं दयितं गता दृष्टिः ] ॥

८. १३. णवरि त्वनन्तरार्थेऽपि ।

अपिशब्दात् केवलेऽपि । —'मरणं सरणं णवरि एक्कं ।' [= मरणं शरणं केवलमेकम् । Ra. II. 1 ] ॥

८. १४. पिव विव मिव[15] अ इवार्थाः

चत्वारः । चंदो पिव । चंदो विव । चंदो मिव । चंदो अ । 'चंदो व्व' इत्युपमार्थवाशब्दस्य यथादित्वात् ( PS. I. 13 ) आतोऽत् । सेवादित्वात् ( PS. III. 75 ) द्वित्वं च ॥

८. १५. इर किर किल निश्चयाख्याने ॥ १३५ ॥

—'जुत्तं इर भणसि' [= युक्तमेव भणसि ] । एवं किर किल ॥

८. १६. किह कीस किणो प्रश्ने

—'किह चिंतसि एकल्लो' [ = किं चिन्तयसि एकाकी ] । एवं कीस, किणो[16] ॥

८. १७. पि वि अप्यर्थे

द्वौ निपातौ । अनुस्वारपूर्व एव पिशब्दः । स्वरपूर्वो विशब्दश्चाभिधानात् । —'तुमं पि भण' [ = त्वमपि भण ] । — 'सो वि सुणेइ[17] [ = सोऽपि शृणोति ] । अन्यत्र—'अवि णाम धेरेज्ज पिआ' [ = अपि नाम ध्रियते प्रिया, R. V. 4 ]

---

14 G अवरं evidently in confusion with Oriya letter ण.

15 The order of the words विव and मिव is reversed in BA, but not in UGIO. 16 UA कीणो.

17 UGIO सुणइ; BA भणइ. I think these two sents. together form one quotation and not two separate ones, in which case the reading of UGIO would be more appropriate.

**८. १८. तिरि तिरोऽर्थे ।**

– तिरि पेच्छसि किं णु अण्णत्तो [ = तिरः प्रेक्षसे किं नु अन्यतः ] ॥

**८. १९. चेअ च्चिअ[18] एवार्थे**

' सो च्चेअ मं च्चिअ वंचेइ ' [ = सः एव मामेव वञ्चयति ] ॥

**८. २०. अं[19] स्मरणे**

– ' अ दट्ठव्वा माल्लइलआ ' [ = अ द्रष्टव्या मालतीलता ]

**८. २१. णवि वैपरीत्ये स्यात् ॥ १३६ ॥**

– णवि तुम्हे अजाणुआं[20] [ = नापि यूयम् अज्ञाः ]

**८. २२. णो खेदामन्त्रणवैचित्र्य[21]वितर्कप्रकोपेषु ।**

– णो तहावि सो जणो ण दिट्ठो ' [ = णो तथापि स जनो न दृष्टः ] । ' णो एहि [ = हे एहि ] । – ' णो कुदो आअत्तुण कत्थ इह ट्ठिओ म्मि त्ति ण जाणामि ' [ = णो कुत आगत्य कुत्र इह स्थितोऽस्मि इति न जानामि ] ।

' महुराणअरवहूहिं गरुअं णो फुरइ अज्जिअं पुण्णं ।
जेण अणिवारिएहिं पिअंति णअणेहि णंदतणअमुहं[22] ॥
[ = मथुरानगरवधूभिः गुरुकं हि स्फुरति अर्जितं पुण्यम् ।
येन अनिवारिताभ्यां पिबन्ति नयनाभ्यां नन्दतनयमुखम् ] ॥

**८. २३. अव्वो विस्मयसूचनसंभाषण[23]खिन्नतानुतापेषु ॥ १३७ ॥**

' अव्वो लोउत्तरं रूवं [ = अहो लोकोत्तरं रूपम् ] । ' अव्वो को एसो '

---

18 BA च्चेअ च्चिअ, ex. च्चेअ तुमं च्चिअ; the readings च्चेअ च्चिअ are according to UGIO.

19 BA अं which is emended to अ according to UGIO. In modern Oriya ओ in used in the same sense.

20 UGIO अलाशृण्णा, evidently a mistake. 21 G वैचित्र्य.

22 The text is retained as it is in BA; UGI are very corrupt:

U ०वहुहि० ज णअएहि मन्द ०मुहं ।

G महुपणपरवहुहिंपरपण्णोपुरइअज्जणं गुहम् ।
जेअपि हरिएहिं पिअत्तपएहिमन्यत्रणअसूहम् ॥

IO ०वहुहि परथंणो पुरइ अज्जिणं पुण्ण ।
जे० पअएहि पन्वञिण असूहम् ॥

23 G ०सन्ताप०; U सम्भाष; IO संभश.

[ = अहो क एषः ] । 'अव्वो पिअसहि पेच्छसु ' [ = अहो प्रियसखि प्रेक्षस्व ] । 'अव्वो णागैओ पिओ ' [ = अहो नागतः प्रियः ] । 'अव्वो किं मए कअं ' [ = अहो किं मया कृतम् ] ॥

**८. २४.　दाणिं एण्हिं अणहा इह एत्ताहे च दाणि एत्तुँण ।**
**अधुनाँर्थाः**

एते सप्त ।

**८. २५.　उअ पश्येत्यर्थे**

— 'उअ णिच्चलणिप्पंदा '[27] [ = पश्य निश्चलनिष्पन्दा, G. S. I. 4 ]

**८. २६.　वे व्वे वले च संबुद्धौ ॥ १३८ ॥**

— 'वे भद्द एहि ' [ = हे भद्र एहि ] । एवं व्वे[28] वले च ॥

**८. २७.　झँत्ति सहसत्ति घत्ति तँडत्ति णँवत्ति एक्करिसिआ थँदे ।**

शीघ्रार्थाः ।

**८. २८.　कल्लिं श्वोऽर्थे**

— 'कल्लिं एहिइ दइओ ' [ = श्वः एष्यति दयितः ] ।

**८. २९.　आम भवँदर्थः**

— 'आम कुणउ[34] ' [ = भवान् करोतु ] ॥

---

24 UGIO शाखए.　　25 Mss. एत्तुण but B एत्तूण.

26 UG °धे.

27 UI णिफन्दा ; BG णिप्फंद ; O णिपन्य ; A णिप्पन्दा which as correct according to Mk. ; see PS. III. 49.

28 The particle वे is offensive in Oriya.

29 GI त्ताझ ; UO तत्ति.

30 B तभत्ति ; UO इतत्ति ; I हितरि ; G दितरि ; A तडत्ति which seems to be correct. In Oriya the word तडिति is used in the same sense. The word seems to have its source in the Skt. word तडित्.

31 UO णवत्ति ; G णपत्ति ; I णवर्त ; but B णवरि. Em. after UO.

32 G इ;.　　33 BA °अंकः, by retainig the reading of UGIO there is no violation of metrical discipline.

34 G कुणइ.

८. ३०. **बहिं बाहे ॥ १३९ ॥**

— 'पाविट्ठ बहिं ठाहि' [ = पापिष्ठ बहिः तिष्ठ ] ॥

८. ३१. **खल जे[35] दे इ र पादप्रपूरणे**

प्रथमो द्व्यक्षरः। अन्ये चत्वार एकाक्षराः। —'दुक्खं खल जीवइ वराई। [ = दुःखं खलु जीवति वराकी ]। —'तुं जे जाणसि सव्वं' [ = त्वं च जानासि सर्वम् ] ॥

८. ३२. **ह्राम एवमित्यर्थे।**

ह्राम भण, एवं भण ॥

८. ३३. **शेषं तु संस्कृतात् स्यात्**

उक्तादन्यच्छेषम्[36]। जअइ। अअं। इअं। गमणं। पढणं। तवस्सी। हंतुं। रंतुं। —'वच्चइ पिअम्मि भणिअं' [ = व्रजति प्रिये भणितम् ]। व्रजति सतीति सप्तम्यन्तस्य परिणतिः। अह। जह। तह। एवमेवेत्यस्य वलोपे एमेअ। जाव, ताव, किंचि, इत्यादि[37] ॥

८. ३४. **तादृश एवात्र तु समासाः।**

तत्पुरुषादयः षट् समासाः संस्कृते[38] ये इष्टाः अत्र प्राकृतेऽपि तादृशा एव स्युः। राअपुरिसो। उवकुंभं। रामलक्खणा। धवखइरपलासं। णीलुप्पलं। बहुधणो ॥

८. ३५. **तत्र निषिद्धाश्च स्युः**

तत्र निषिद्धाश्च समासा इह प्राकृते स्युः। गहपंचमो गुरू। माणुससूरतैमो[40] खत्तिओ ॥

८. ३६. **पूर्वनिपातोऽन्यथा प्रायः ॥ १४० ॥**

समासे संस्कृतविहितः पूर्वनिपातः[41] प्राकृते प्रायोऽन्यथा स्यात्। धवखइरा,

---

35 UGIO ते ; evidently a mistake ; जे is also used in Oriya in the same sense. 36 G ततोदन्यम्त. ; IO ततोदन्यच्.

37 UGIO चिदित्यादि ; A om. 38 U om.

39 UGIO वे यदृवि (शि in UG) इ. 40 U गुम्मरअमो द्रुम्मरअमो; A अमो. 41 UGIO om. portions from विहितः up to this.

खइरधवा । कइबुहा, बुहकइणो । भीमधणंजआ, धणंजअभीमा ॥

बालव्युत्पत्तिदिङ्मात्रं दर्शितं यत्नतो मया ।
विज्ञातव्यं तु विद्वद्भिः शेषं शिष्टप्रयोगतः ॥

इति श्रीमार्कण्डेयकवीन्द्रकृतौ[42] प्राकृतसर्वस्वे भाषाविवेचने
महाराष्ट्र्यनुशासनमष्टमः पादः[43] ॥ ८ ॥

---

42 UIO कृते.

43 N. B. — A has perserved the text only upto the end of this Pada. The rest of the text, though once existed, as the Ms. pagings show, are now lost.

## नवमः पादः ।

अथ शौरसेन्यनुशिष्यते ।

**९. १. शौरसेनी महाराष्ट्र्या संस्कृतानुगमात् कचित् ।**

सिध्यतीति शेषः । यत्र विशेषलक्षणं नास्ति तन्महाराष्ट्रीवत् । यथा–मादा, पिदा, अअं, इअं, णिंदेदि, छिंदेदि, भणेदि, रणेदि, हरेदि, सुहं, विहवं । भिण्णं, जिण्णं । कचिद्ग्रहणात्–किणेदि, जिणेदि । एवमन्ये द्रष्टव्याः ॥

**९. २. नेद्वेतसाङ्गारयोः स्यात्**

वेदसो । अंगारो ॥

**९. ३. ओत्वं च बदरादिषु ।**

न स्यात् । बअरं । लावण्णं । चउट्ठी । चउद्दही । मऊरो । मऊहो ॥

**९. ४. यथादिषु कचिद्ध्रस्वः**

न स्यात् । यधा । तधा । कुमारी । मज्जारो ॥

**९. ५. पिण्डादिष्वेदकिंशुके ॥ १४१ ॥**

न स्यादित्येव । पिंडं । धम्मिल्लं । किंशुके तु किंसुओ केसुओ । वेंटमिति यद्दृश्यते तत् प्रमादपाठ एव ॥

**९. ६. मुक्तापुष्करवर्जे तुण्डादिष्वोत्**

न स्यात् । तुंडं । कुट्टिमं । मुक्तापुष्करवर्जमिति किम् । मोत्ती । पोक्खरं । पोक्खरिणी ॥

**९. ७. उडूखले ड्वा च ।**

ड्वा सह ऊत ओन्न स्यात् । उलूहलो ॥

**९. ८. एदीदृशकीदृशयोः**

ईत एन्न स्यात् । ईदिसं । कीदिसं ॥

**९. ९. इत् पुरुषे च**

रोरुत इन्न स्यात् । पुरुसो ॥

---

1 UGIO सुहं. 2 B lacks these two words; UIO write them as भिक्णो, जिक्णो ; G as भिण्णो, जिण्णो. Em. is mine.

3 G पदात् ; O पाठात्. 4 UIO नेवेति ; G बेद्वेति.

5 UGIO व. 6 UIO उलूहलो ; O उऊहलो.

९. १०. अद्युधिष्ठिरोपर्योः ॥ १४२ ॥
ततोऽन्न स्यात् । जुहिट्ठिरो । उवरि ॥

९. ११. इद्वेदनादेवरयोः
एत इन्न स्यात् । वेअणा । देअरो ॥

९. १२. अत्ववत्वे प्रकोष्ठके ।
ओतोऽत्वं कस्य वत्वं च न स्यात् । पओट्ठो ॥

९. १३. अइर्दैवे
न स्यात् । देव्वं ॥

९. १४. गौरव आत्
न स्यात् । गोरवं, गउरवं ॥

९. १५. अउत् कौरवँपौरवे ॥ १४३ ॥
अनयोरौतः स्थाने अउन्न स्यात् । कोर्रवो । पोरवो । अन्यत्र पउरुसं ॥

९. १६. ऋण्यादौ यादृशाद्याः स्युः
जादिसं । तादिसं । ईदिसो । कीदिसो । एआरिसो, अण्णारिसो इति केचित् । मिओ मृतः, पूतना पिदणा इत्यादयः ॥

९. १७. रुक्खो वृक्षस्य केवलः ।
स्यात् । न तु वच्छो ॥

इति शौरसेन्यामज्विधिः प्रथमं प्रकरणम् ॥

---

7 BUGIO गौरवे. 8 B कोरओ; O कोरयो. 9 BUIO गोरवो; G गोरवं and adds एवं पोरवो; I have emended the text after this last word given in G; in that case गोरवं and एवं are to be taken as confusions. The word गोरवो as given in BUIO ought to have been neuter gender corresponding to Skt गौरवम्. Again, the change of औ into अउ which is admissible in M. by I. 51, is here denied by IX. 14 above. If we take गौरवे as the original reading, this would contradict IX. 14. As a matter of fact गोरवं has already been given as an example in Sū. 14 (see above) where the change of औ into आ does not take place in गौरवम्. Though Mk has not given पौरव as a word coming under the पौरादि class (see PS. I. 49), he has probably taken पौरव under the पौरादि class. Rt. denies the change of औ to अउ to the entire पौरादि class. Cf. Rt. II, 1. 4.

९. १८. **अपदादावयुजाम्**[10]
इत ऊर्ध्वमपादादावयुक्तानां ज्ञेयम् ।

९. १९. **शीकरचन्द्रिकयोर्भमौ** ॥ १४४ ॥[11]
न स्तः[12] । सीअरो । चंदिमा ॥

९. २०. **अपताकाव्यापृतगर्भितेषु बहुलं तकारो दः** ।[13]
स्यात् । – ' सहि दइदमालदीजीविदे[14] साहसोवण्णासिणि ' [=सखि दयित-मालतीजीविते साहसोपन्यासिनि, M. M. II 1/2 ] । बहुलग्रहणात् ' अतुलिअपरक्कमो ' [ =अतुलितपराक्रमः ] ॥

९. २१. **पो वः स्यात्**
' पावेण तावं लहंति ' [ = पापेन तापं लभन्ते ] ॥

९. २२. **न कबन्धे पमौ**
स्याताम् । कबंधो ॥

९. २३. **अपूर्वेऽवरूवं वा ।**
स्यात् । अउव्वं, बाहुल्यात् पलोपः । अवरूवं ॥

९. २४. **थो धोऽप्रथमपृथिव्योः**
थो धः स्यात् । जधा । कधेदि । प्रथमपृथिव्योस्तु पढुमं, पुहई ॥

९. २५. **भरते थस्तस्य**
तस्य धः स्यात् । भरधो ॥

९. २६. **न दलोपः ॥ १४५ ॥**
महाराष्ट्रीसिद्धो दलोपो न स्यात् सोदामिणी[15] । दुरासदो[16] । बाहुल्यात् हिअअं ॥

९. २७. **धभौ दबवदुबायौं**
मधुरं । कलभो । बाहुल्यात् णहअलं ॥

९. २८. **हरिद्रादिषु लः क्वचित् ।**
रस्य लः स्यात् । हलिद्दा । वलणं । क्वचिद्ग्रहणात् जुहिट्ठिरो, महुरो ॥

---

10 UGIO अव(-आ)दादावयुक्ता ( – ताः in O ). 11 IO शाकर; G भागर.
12 UGIO स्तुः; they again include this in Sū., which is obviously faulty. 13 U तकारादेशः; G कारान्तरादेशः; IO तः स्यात् is included in Sū. according to Mss. 14 Mss. insert सह here.
15 UGI सोदामणी. 16 UGIO दुरोसदो.

**९. २९. फो हः**

स्यात्। सैहलं[17]। सहरी[18]॥

**९. ३०. नो पाषाणे**

पाषाणे[19] षस्य हो न स्यात्। पासाणो॥

**९. ३१. दशचतुर्दश्योरनाम्नि वा॥ १४६॥**

अनाम्नि दशचतुर्दश्योः शो हो वा स्यात्। दस दह। चउद्दस, चउद्दह। नाम्नि तु दसरहो, दसमुहो। चतुर्दशग्रहणात् एआरह, वारह॥

इति शौरसेन्यामपदाद्ययुक्तविधिर्द्वितीयं प्रकरणम्।

**९. ३२. आदौ पदस्य**

अधिकारोऽयम्।

**९. ३३. शावे छो न स्यात्**

सावो॥

**९. ३४. लाङ्गलादौ णः।**

न स्यात्। लंगलं। लंगूलं। लोहलं॥

**९. ३५. यष्ट्यां लश्च**

न स्यात्। जट्ठी॥

**९. ३६. किराते चः**

न स्यात्। किरादो॥

**९. ३७. डः स्याद्दह्यमानस्य॥ १४७॥**

नेति निवृत्तम्। डज्झमाणो। अन्यत्र दोला, दंडो, दसणो, दहणो॥

इति शौरसेन्यां पदाद्ययुक्तविधिस्तृतीयं प्रकरणम्॥

**९. ३८. सर्वत्र युक्तस्य**

सर्वत्र पदादिमध्यान्तेषु। अधिकारोऽयम्॥

**९. ३९. न खः स्फोटकस्य**

खो न स्यात्। फोडओ॥

---

17 G सहवं; UIO सहणं. 18 UIO सहचरी (–रि in IO); G वरी.
19 UGIO om. 20 B °ढो.

९. ४०. उत्थितस्य ठः ।

न स्यात् । उत्थिदो ॥

९. ४१. क्षणक्षीरसदृक्षाणां छः

न स्यात् । खणो । खीरं । सरिक्खो ॥

९. ४२. डः संमर्दगर्दभे[21] ॥ १४८ ॥

अनयोर्डो न स्यात् । सम्मद्दो । गद्दहो ॥

९. ४३. कूष्माण्डे हः

न स्यात् । कुम्हंडो ॥

९. ४४. अभिमन्यौ जः

न स्यात् । अहिमण्णू ॥

९. ४५. चिह्ने न्धः

न स्यात् । चिण्हं ॥

९. ४६. अथ विभाषिताः ।

बाष्पे हो भिन्दिपाले ण्डो ण्यन्यज्ञेषु न इत्यमी ॥१४९॥

एष्वमी हण्डजा विभाषिताः । बाहो, बप्फो । भिंदिवालो, भिंडिवालो । अब्बम्हण्णं, अब्बम्हज्जं । अहिण्णाणं, अहिज्जाणं । कण्णआ, कज्जआ । बाहुल्यात्–जण्णसेणो, इंगिअज्जो ॥

इति शौरसेन्यां पदादिमध्यान्तविधिश्चतुर्थं प्रकरणम् ।

९. ४७. संधीनां विश्लेषा बहुलं[22]

स्युः । जुज्जदि एदं । आअच्छादि एत्थ । — ' ण मे वअणमण्णधा[23] भविदुमरिहदि[24] [ = न मे वचनमन्यथा भवितुमर्हति, Śāk. IV. 70/71 ] ॥

९. ४८. नाज्लुग्विशेषाः[25] स्युः ।

राअउलं । देअउलं[26] । जउणाअडं । वेणुवणं[27] । बासइसी । चक्कआओ । अंतेउरं[28] ॥

---

21 °भयोः. 22 B separates this from Sū. rightly unlike Mss. which include the same in Sū. 23 UGIO °वअणा.

24 B अरहदि ; om. according to Mss. The from अरिहदि is also allowed; see III. 85. 25 UI °लुक्विशेषाः ; G यहलुक्षु शेषाः; O नाह्लविशेषाः. 26 B देव°; em. according to Mss. 27 B णू°; em. according to Mss. 28 GI अउउरं.

९. ४९. पुनरपि पुणरवि

पुनरपीत्यस्य पुणरवि न स्यात्। पुणवि, पुणोवि ॥

९. ५०. कौतूहलसेवास्थूलके द्वित्वम् ॥ १५० ॥

न स्यात् । कोदूहलं । सेवा । थूलं । अन्यत्र देव्वं, जोव्वणं ॥

९. ५१. कालायसभाजनयोर्लुक्

न स्यात् । कालाअसो । भाअणं ॥

९. ५२. इदानीमस्तु बिन्दोर्वा ।

लुक् स्याद्वा । इदाणिं, इदाणि । नियमादन्यत्र मांसादौ लुक् न स्यादेव । मंसं, णूणं, कथं इत्यादि ॥

९. ५३. परिवर्तनं करेण्वितरथयोर्न स्यात्

वेति निवृत्तम् । करेणू[29] । इअरधौं[30] ॥

९. ५४. बृहस्पतौ च भञः ॥ १५१ ॥

न स्यात् । बिहप्फदी ॥

९. ५५. त्वस्य त्तम्

न स्यात् । पहुत्तणं ॥

९. ५६. लक्ष्यानुसाराल्लिङ्गं स्यात्

भाअहेओ, भाअहेअं । गोणो, गोणं ॥

९. ५७. क्त्वायचोरिअः ।

स्यात् । हसिअ । विहासिअ ॥

९. ५८. कृगमिभ्यामुअश्च स्यात्तयोः कदगदावपि ॥ १५२ ॥

कृगमिभ्यां क्त्वायचोरुअः स्यात् तयोः स्थाने कदगदावपि स्याताम् । कदुअ । गदुअ । उवकदुअ । आगदुअ ॥

इति शौरसेन्यां संकीर्णविधिः पञ्चमं प्रकरणम् ॥

९. ५९. आदतो दुर्वाससः सौ

सौ दुर्वाससोऽत औं[31] स्यात् । दुव्वासा । साविति किम् । दुव्वासेण ॥

---

29. I करेंट ; O करेट. 30 B इअरहा; G इहरधा ; IO इहरधौं which is a confusion for इअरधा ; hence em. 31 Mss. om. this word.

९. ६०. दो ङसेः

दो एव स्यान्नान्ये। रुक्खादो। अग्गिदो। वाउदो[32] ॥

९. ६१. आदतः क्वचित्।

अतो ङसेरात् स्यात् क्वचित्।– 'तव कारणा किलिट्ठो सो जणो[33]' [= तव कारणात् क्लिष्टः स जनः]॥

९. ६२. ङेरे

अत उत्तरस्य ङेरे स्यात्। रुक्खे॥

९. ६३. इदुद्भ्यां म्मि

इदुद्भ्यामुत्तरस्य ङेर्म्मि स्यात्। अग्गिम्मि। वाउम्मि॥

९. ६४. जसो वो न स्यात्

इदुद्भ्यामुत्तरस्य जसो वो न स्यात्। कइणो, कअओ। भाणुणो, भाणओ॥

९. ६५. उत्तथा स्त्रियाम्[34] ॥ १५३ ॥

स्त्रियां जस उत्[35] स्यात्। मालाओ। णईओ। वहूओ॥

९. ६६. टाङसिङसुङीनामेत्[36]

स्यात्। नेति निवृत्तम्। बालाए। णईए। वहूए॥

९. ६७. द्वितीयया मादरं मातुः।

पदादेशोऽयम्। मादरं पेक्ख।

९. ६८. ई न किमादेः[37]

किमादेः स्त्रियामी न स्यात्। का। जा। ताए। इमाए॥

९. ६९. क्लीबे जश्शसोर्णि वा[38]

स्यात्। वणाणि, वणाइं वा॥

---

32 UIO वाम्हदो; G वासवो. 33 UIO जनो; G ओनो.

34 G reads Sū. as ओ स्त्रियाम्; IO ततथा स्त्रियाम्.

35 G 'जस ओत्'; IO very corrupt; स्त्रायां जं (अं in O) मं तत्र स्यात्.

36 GIO शङ्क° thus the confusion between टा and श very often occurs in Mss. which is a clear proof to confirm the confusion between टाङी and शङी; the manner of writing Oriya letters by the scribes is responsible for such a confusion.

37 G confuses this Sū. with No. 71 and om. 69 & 70.

38 B. om. जस् from Sū. and includes स्यात् in it. The reading suggested is in accord with UIO with this exception that they include स्यात् in Sū. which being done so, violates metrical rule.

९. ७०. न चैसिमिदमादेः ॥ १५४ ॥

इदमादेराम एसिं न स्यात् । इमाणं । काणं । जाणं । ताणं । एदाणं ॥

९. ७१. आस स्सा से चो किमादेः

किमादेरास स्सा चो इति विभक्त्यादेशाः से[39] इति पदादेशश्च न स्युः । कस्स । जस्स । तस्स । काए । ताए । इमाए । एदाए । कदो । जदो । तदो । इमादो ॥

९. ७२. स्तातामेव कुदो इदो ।

अर्थात् किमिदमोः ॥

९. ७३. नालादिः

आला इआँ आहे इत्यादिर्न स्यात् । कस्सि, कहिं, कत्थ । तस्सि, तहिं, तत्थं । म्मिर्न स्यात् ॥

९. ७४. आमेदमः सिं

आमा सह इदमः सिं न स्यात् । इमाणं ॥

९. ७५. इहस्येधो विधीयते ॥ १५५ ॥

इध ॥

९. ७६. क्लीबे स्वम्भ्यामिदमिणं

इति द्वे स्याताम् । इदं वणं, इणं धणं वा ॥

९. ७७. सुनेअमअमन्यतः ।

अन्यत्र स्त्रीपुंसयोः । इअं बाला । अअं रुक्खो । नियमार्थमिदम् ॥

९. ७८. नैसैतदः

सुना एतद एस न स्यात् । एसो जणो ॥

९. ७९. अहादसश्च

सुना अदसश्च अह न स्यात् । अमु जणो । अमु बहू । अमु वणं ॥

९. ८०. ङसिङस्भ्यामदो भवेत् ॥ १५६ ॥

एतददसोरित्येव । अदो कारणादो ॥

---

39 O om. 40 UGIO एका.

41 UG om. this second set of ex. but IO retain.

42 UG om. this ex. but IO retain.

९. ८१. **अथ युष्मदस्तुमं सम्भ्याम्**

युष्मद इत्यधिकारः । तुमं स्यात् । तुमं त्वं त्वां वा ॥

९. ८२. **तुम्हे भवति जश्शस्भ्याम् ।**

तुम्हे यूयं, युष्मान् वा ॥

९. ८३. **टाङिभ्यां तु तए स्यात्**

तए त्वया, त्वयि वा ॥

९. ८४. **तुम्हः स्याद्भिसम्भ्यसामसुपूर्वं ॥ १५७ ॥**

एषु परेषु तुम्हः स्यात् । अत एत्वम् । तुम्हेहिं । तुम्हेहिंतो । तुम्हाणं, दीर्घः । तुम्हेसुं ॥

९. ८५. **ङसिना समं तुमादो**

स्यात् । तुमादो ॥

९. ८६. **तेदेतुम्हा ङसा**

ङसा सह त्रयः स्युः । ते । दे । तुम्ह ।— 'तुज्झ ण जाणे हिअअं' [= तव न जाने हृदयम्, Śāk. III. 59 ] इति गाथायां महाराष्ट्री ॥

९. ८७. **शसाम्भ्यां वो ।**

वो युष्मान् युष्माकं वा । पूर्वसूत्रात् तुम्हे तुम्हाणं ॥

९. ८८. **अहमस्मदः सुना स्यात्**

अहं ॥

९. ८९. **जसा वअं स्यात्**

वअं ॥

९. ९०. **शसा चाम्हे ॥ १५८ ॥**

शसा अम्हे स्यात् । अम्हे भण । चकारात् जसा च । अम्हे भणिम्ह ॥

---

43 IO read everywhere म्ह in place of म्ह.

44 U om.; IO भिवसाम्सु.

45 B जाणे ; em. according to Mss. which invariably read जाणे — a form also allowed in M., for the elision of intervocal consonants is not always binding as Mk. himself confirms it ; cf. PS. II. 2.

46 UG °म्हए ; IO म्मए.

९. ९१.   **ममम्मा**

अमा सह मं स्यात् । मं पेक्ख ॥

९. ९२.   **टया मए स्यात्**

मए कदं ॥

९. ९३.   **मइ च ङिना स्यात्**

मइ ठिदं । चकारात् मए ठिदं ॥

९. ९४.   **न मज्झ ङसा ।**

ङसा मज्झादेशो न स्यात् । अन्ये तु स्युरेव । मे । मम । मह ॥

९. ९५.   **आमाम्हं अम्हाणं**

स्याताम् । अम्हं, अम्हाणं धणं ॥

९. ९६.   **ङसिना मत्तो ममादो द्वौ ॥ १५९ ॥**

स्याताम् । अन्ये तु न स्युः । मत्तो, ममादो मत्ते ॥

इति शौरसेन्यां सुब्विधिः षष्ठं प्रकरणम् ॥

९. ९७.   **धातोः परस्मैपदं स्यात्**

पचइ । वड्डइ ॥

९. ९८.   **त्रिषु प्रायेण लेंट् भवेत् ।**

त्रिषु कालेषु । अहं भणामि । रामो राआ मोदि ॥

९. ९९.   **लोट् विध्यादौ**

पचदु । जादु ॥

९. १००.   **भाविनि लृट्**

न लुट् । बली इंदो भविस्सदि ॥

९. १०१.   **त्यादेर्दस्तस्य**

त्यादेस्तस्य दः स्यात् । मोदि । गच्छदु । गमिस्सदि । केवलतकारग्रहणात् भणंति, पचंतु, इत्यादयः ॥

---

47 This sent. is found only in G.   48 U om.

49 Mss. मत्त.   50 Mss. om. कइ and read.पाये for प्रायेण.

९. १०२. भूम्नि धः ॥ १६० ॥

भूम्नि बहुत्वे तस्य धः स्यात्। चिट्ठध[51] । यस्य धत्वेऽप्येवं रूपम् ॥

९. १०३. उत्तमे म्हः

उत्तमपुरुषबहुत्वे विभक्तेः म्हः स्यात्। करेम्ह। चिट्ठेम्हे[52] ॥

९. १०४. भविष्यति स्सश्च स्यादौ[53]

भविष्यति[54] स्यादौ परे स्सो विकरणः स्यात्, नोऽन्ये[55]। गमिस्सदि। भणिस्सदि[56] ॥

९. १०५. स्समेव च।

उत्तमे मिडा सह स्समेव स्यात्। गमिस्सं। भणिस्सं ॥

९. १०६. न ज्जाहासोच्छमाद्याः

धातुतिङोर्मध्ये विहिता ज्ज ज्जा ह्रा इति त्रयः तिङां स्थाने ज्ज ज्जा इत्युभौ च न स्युः। सोच्छं, वोच्छं, रोच्छमित्यादयश्च न स्युः। देदि, भोदि। करिस्सदि, भणिस्सदि। सुणिस्सं, वुच्चिस्सं, रोदिस्सं, करिस्सं, इत्यादि ॥

९. १०७. अत एत्वं तुमादिषु ॥ १६१ ॥

न स्यात्। पचिदुं। पचिदव्वं ॥

इति शौरसेन्यां तिङ्विधिः सप्तमं प्रकरणम् ॥

९. १०८. भुवो भो

भो स्यात्। भोदि। भोदु ॥

९. १०९. होश्च शाँकल्यमते स्यात्[57]

होदि ॥

९. ११०. क्त्वाल्ँटोर्भवः[58]।

स्यात्। भविअ। स्थानिवद्भावात् परिभविअ। भविस्सदि ॥

---

51 B धस्थ which is not authorised by Mss.

52 B बस्म्ह; em. after Mss. 53 O om. this Sū. but retains the comm. 54 B excludes this whereas Mss. include it in Sū.

55 UGIO om. 56 UGIO भविस्सदि, but since in the following Sū. and elsewhere गम् is usually accompanied by भण् as ex., the ex. given by B is acceptable. 57 UGIO सा.

58 BUGI read °कुदोः; O °कुपे; both these go counter to the ex. given in comm; hence em.

९. १११.        न क्ते हूः

क्ते भुवो हू न स्यात् । भूदं ॥

९. ११२.        पश्यतेः पेच्छः

स्यात् । पेच्छदि । प्रेक्षतेस्तु पेक्खदि ॥

९. ११३.        बुधो बुद्धः

बुद्धदि ॥

९. ११४.        कथेः कधः ॥ १६२ ॥

कधेदि । न तु साहसासौ ॥

९. ११५.        घ्रो जिग्घः स्यात्

जिग्घदि ॥

९. ११६.        भातेर्भाअः

भाअदि ॥

९. ११७.        फुंसो मृजेः

फुसः स्यात् । फुसदि ॥

९. ११८.        क्षुदः खुंदः ।

स्यात् । खुंददि ॥

९. ११९.        घूर्णो घुम्मः

घुम्मदि ॥

९. १२०.        स्तौतेस्थुणः

थुणदि ॥

९. १२१.        भियो भा

भादि ॥

---

59 B फुंसो ; IO वुंसो which may be due to confusion with फुसो written in Oriya script. Em. according to UG which read फुस insted of फुंस ; also cf. He. IV. 105.

60 IO क्षुदः.

९. १२२. घसः [61]सृजतेः ॥ १६३ ॥

[62]घंसदि ॥

९. १२३. [63]छुंपच्छिछगच्छुवौ

स्यातास्। छिग्गदि। छु[64]व्वदि ॥

९. १२४. भावकर्मणोस्तु [65]छुवो भवेत्।

छुवीअदि ॥

९ १२५. लटि दाओ दइ भवेत्

दइस्सदि ॥

९. १२६. यक्क्त्वायच्सु द इष्यते ॥ १६४ ॥

दाञ इत्येव। दीअदि। दइअ। पदइअ। अन्यत्र देदि, देदु, दादुं, दादव्वं ॥

९. १२७. चर्चेश्चव्वः

स्यात्। च[66]प्पो न स्यात्। चव्वदि। एवमन्यत्रापि ॥

९. १२८. ग्रहेर्गेण्हः

स्यात्। गेण्हदि ॥

९. १२९. गेज्झघेप्पौ यका सह।

ग्रहेः स्याताम्। गेज्झदि, घेप्पदि[67] ॥

---

61 Dr. Ghosh is right in pointing out that सृजतेः is the correct word instead of सुजतेः ( cf. PK. p. 124 ). In Oriya too there is the use 'घसाश्मजा' which confirms this hypothesis. Yet B and Mss. read सुजतेः, and had it been a scribal error ( as Dr. Ghosh presumes ) we should have घसो सुजतेः, as the Sū. and not घसः सुजतेः, thus rightly in keeping with the sandhi rule. Hence it should not be taken as a scribal error. Again we have already Sū. फुसो मृजेः in which the धात्वादेश of मृज् has been given.

62 UGIO °ति.

63 UGIO गच्छतेः.

64 B छुवदि which goes against the reading of Mss. The doubling occurred in Sū. is different being according to Sandhi rule.

65. B छवो ; ex. छवि; em. is according to Mss. In the opinion of Rt. it is छिप्प and च्छिव both ; cf. II. 1. 29.

66 I चग्गो ; G वग्गो; UG वग्गो.

67 IO घेग्गदि ; UG om. Definitely in these exs. प्प has been confused with ग्ग.

९. १३०. न ककचतुतव्येषु कपिलो गेण्हमिच्छति ॥ १६५ ॥
गहिदं । गहिदव्वं ॥

९. १३१. शक्नोतेः सक्कुणसक्कौ
स्याताम् । सक्कुणदि, सक्कदि ॥

९. १३२. तीरो भाँवकर्मणोर्न स्यात् ।
शक्नोतेरित्येव । सक्कुणीँअदि, सक्कीअदि ॥

९. १३३. म्लायो मिलाअ
स्यात् । मिलाअदि ॥

९. १३४. हुश्रुजिलूञां णोऽन्ते
एषामन्ते ण एव स्यात् । हुणदि । सुणदि । जिणदि । लुणदि । अन्यत्र तु धुणदि, धुअदि ॥

९. १३५. यका न ण्वः ॥ १६६ ॥
एषां णस्य यका सह ण्वो न स्यात् । हुणीअदि, सुणीअदि ॥

९. १३६. स्थश्चिट्ठः
स्यात् । चिट्ठदि ॥

९. १३७. उदोत्थः स्यात्
उदा सह स्थ उत्थः स्यात् । उत्थेदि ॥

९. १३८. स्वपेः सुअः स्यात्
नान्यत् । सुअदि ॥

९. १३९. लडादिकेषु सुवः ।
सुविस्सदि । सुविदं । सुविदव्वं । सुँविदुं । सुविअ ॥

९. १४०. स्मरते सुमरः
सुमरदि । विसुँमरदि ॥

---

68 O नीरे.
69 UG सक्क०; IO सक्कणा०.
70 UGIO सुविदं.
71 Missing in UG only.

९. १४१. शीङ्रुविरुदां सुआरोवरोदाः स्युः ॥ १६७ ॥
सुआदि । रोवदि । रोददि ॥

९. १४२. मज्जेः खुप्पो न स्यात्
बुड्डदि । मज्जदि ॥

९. १४३. राजो रेहः
न स्यात् । राअदि ॥

९. १४४. कृञश्च कुणः ।
न स्यात् । करेदि ॥

९. १४५. मो हनिखन्योः
न स्यात् । हणदि । खणदि ॥

९. १४६. दुब्भादयो यका
दुहादीनां यका सह दुब्भादयो न स्युः । दुहीअदि । वहीअदि । लिहीअदि ॥

९. १४७. द्विर्गमाद्यन्तः ॥ १६८ ॥
यका सह गमादेरन्तो द्विर्न स्यात् । गमीअदि । रमीअदि ॥

इति शौरसेन्यां धातुपरिणतिरष्टमं प्रकरणम् ॥

९. १४८. बहुलं भीष्मादेर्भिप्फाद्याः स्युः
मुख्यलक्षणैरसिद्धा निपात्यन्ते । भीष्मे भिप्फो । शत्रुघ्ने सत्तुग्घो । यावति जेत्तिकं । एवं तेत्तिकं, एत्तिकं, भट्टारओ, भट्टा, अच्छरीअं, दुहितरि धूदा, दुहिदिआ, स्त्रियां इत्थी,—'इत्थीअणं पहरंतो कधं ण लज्जसि' [=स्त्रीजनं प्रहरन् कथं न लज्जसे, Ra. II. p. 46], भादा, भादुओ, जामादा, जामादुओ, इत्यादयः ॥

72 U भिब्भा०; G भब्भा०, IO भिब्भा०.
73 G सुत्त०; UIO असिद्धो; G °सिद्धो for असिद्धा.
74 UIO भिब्भो; G भब्भो; 75 UGO भादा; I भादी.
76 O दुहिआमित्थं for the portion from दुहि० up to this.

९. १४९. नामनि किबन्ताः स्युः ।
इंदई । सत्तुई शत्रुजिन्नाम राजा । विस्सई विश्वाजित् क्रतुविशेषः ॥
अथाव्ययनिपाताः—
९. १५०. द्रागित्यर्थे दउत्ति
स्यात् ॥
९. १५१. क्खु निश्चये
— ' सो क्खु तुम्हाणं पिदा ' [ = स खलु युष्माकं पिता, छलितराम, SD, 528 ] ॥
९. १५२. बिन्दुतः कलुक् ॥ १६९ ॥
बिन्दोः परस्य क्खुशब्दस्य कलुक् स्यात् । तं खु भणामि ॥
९. १५३. एवार्थे ज्जेव स्यात्
सो ज्जेव जणो ॥
९. १५४. बिन्दोर्जो लुग्वो द्वित्वं वा भवेत् ।
बिन्दोरुत्तरस्य ज्जेवशब्दस्य । तं जेव्व, तं जेव ॥
९. १५५. नन्वर्थे णं
स्यात् । नोपमार्थे । णं भणामि ॥
९. १५६. इवार्थे विअ
स्यात्[77] । चंदो विअ ॥
९. १५७. क्वचिद् व्व[78]
इवार्थे इत्येव । चंदो व्व[79] ॥
९. १५८. पूर्ववच्छेषम् ॥ १७० ॥
उक्तादन्यत्पूर्ववत् महाराष्ट्रीवद्वेदितव्यम् ॥

राजपत्न्यादिवक्त्रेन्दुसंवासहृदयंगमी[80] ।
मृदुगम्भीरसंदर्भा शौरसेनी धिनोतु वः ॥

इति श्रीमार्कण्डेयकवीन्द्रकृतौ प्राकृतसर्वस्वे भाषाविवेचने
शौरसेन्यनुशासनं नवमः पादः ॥ ९ ॥

---

77 from तं खु° ( 152 ) up to this IO. om.
78 O om. the last ex. 79 IO °वसु° 80 UGIO °गमो.

## दशमः पादः ।

अथ प्राच्या । प्राच्या विदूषकादिहास्यपात्रभाषा[1] । — 'प्राच्या विदूषकादीनाम्' ( NS. XVII. 51 ) इति भरतः । —

पूर्वापरहतं क्वापि क्वचिच्छेकोक्तिसुन्दरम् ।
ग्राम्याम्यामुपमोक्तिभ्यां युक्तं वक्ति विदूषकः ॥

इति च ॥

**१०. १. प्राच्यासिद्धिः शौरसेन्याः**

शौरसेनीतः प्राच्यायाः सिद्धिर्वेदितव्या ॥

**१०. २. ओक्खमाणो भविष्यति ।**

भविष्यच्छन्दे[2] । पंडिदो ओक्खमाणो पढेदि ॥

**१०. ३. मूर्खे मुरुक्खः**

स्यात् । मुरुक्ख, ण जाणासि ।

**१०. ४. भवत्यां भोदि**

स्यात्[3] । — 'भोदि साअरिए' [ = भवति सागरिके, Ra. III. p. 117 ] स्त्रीलिङ्गनिर्देशात् — 'जं भवं भणादि[4]' [ = यद् भवान् भणति ] ॥

**१०. ५. वक्रे तु वक्कु च ।**

वक्कु भणामि । चकारात् वंकं[5] च ॥

---

1 I विदूषकादि; G विदूषकपात्रस्य; हास्य० भाषा; om.; U विदूषणादि O विदूषणादि; B विदूषकविटादि; since the inclusion of विट as has been done by B is not attested by any Ms., I have omitted that word and retained the reading of I as authentic. This is also confirmed by the fact that विदूषक alone speaks प्राच्या in Skt plays and he is prominent humorous figure unlike Viṭa. Moreover the quotation from Bh. as given by Mk. mentions Vidūṣaka as the fore-ranking humorous character.

2 G भविष्यच्छन्दो; also IO भविष्यच्छब्दे०; U भविष्यच्छब्दे; B lacks this portion of comm.

3 B om. 4 U भणादि. 5 UIO भवकं; G वंकुमं.

**१०. ६. वंकुमं केचिदिच्छन्ति**

वक्र इत्येव । —— दुज्जणकामिणीहिअअवंकुमेण इमिणा दंडकट्ठेणं[6] [= दुर्जन-कामिनीहृदयवक्रेण अनेन दण्डकाष्ठेन; Ra. II. p. 60 ] ॥

**१०. ७. प्रकृते वहणं भवेत्[7] ॥ १७१ ॥**

स्पष्टम् ॥

**१०. ८. अत आभिहीर्नसंबुद्धौ[8]**

अर्थात् सौ परे । —— 'ओसर रे चेडआ ओसर' [ = अपसर रे चेटक अपसर ] । अन्यत्र —— 'अज्ज पणमामि' [ = आर्य प्रणमामि ] ॥

**१०. ९. हीहीभो परीतोषे ।**

अव्ययोऽयं निपातः, वक्ष्यमाणाश्च । —— 'हीहीभो कोसंबीरज्जलाभेण वि पिअवअस्सस्स[9] ईदिसो परिओसो ण भविस्सदि' [ = अहो, कौशाम्बीराज्य-लाभेनापि प्रियवयस्यस्य ईदृशः परितोषः न भविष्यति, Ra. III. p. 101 ] ॥

**१०. १०. ज्जेज ज्जिअ चैवार्थे[10]**

द्वौ स्याताम् । सो ज्जेअ । चकारात् ज्जेव च । बिन्दुपरत्वे कार्यं महाराष्ट्रीवदेव । तं ज्जेअ । तं ज्जेव । तं ज्जेअ । तज्ज्जेव । तं ज्जिअ । तज्ज्जेअ[11] ॥

**१०. ११. अद्भुते हीमाणहे[12]**

—— 'हीमाणहे । अदिट्ठपुव्वं अस्सुदपुव्वं खु ईदिसं रूवं' [ = अहो, अदृष्ट-

---

6 The quotation is variously written as follows—
U— °वक्कुतेण॰ दण्ठ॰
G— कामिणा॰ वक्कुमाजिणइमिणादण्डकट्टेण
IO— वक्कुतेण इमाणा दंड॰

7 U om.  8 UGIC °अताभिस्वहीना.

9 UGI गाइ वस्समस्स ; O गाइ वस्सस्स.

10 G अज्ञो अज्जि अचेवार्थे ; O अस्नो अपि अचेवार्थे ;
I अस्वो अज्जि अचेवार्थे ; U अज्जो अच्चि अचेवार्थे

11 U om. conjunct ones.  12 B brackets ग in between the two words which Mss. do not authorise.

पूर्वमश्रुतपूर्वं खलु ईदृशं रूपम्] ॥

१०. १२. **अविद विषादे ॥ १७२ ॥**

अभिधानाद्वीप्सायाँ[13] प्रयोगः। — 'अविद अविद भो किं खु जादं' [= अविद अविद भो किं खलु जातम्] ॥

इति श्रीमार्कण्डेयकवीन्द्रकृतौ प्राकृतसर्वस्वे भाषाविवेचने
प्राच्यभाषानुशासनं दशमः पादः ॥ १० ॥

---

13 G वीप्सायाः प्रयोगः.

## एकादशः पादः ।

अथावन्तीभाषानुशिष्यते ।

**११. १. आवन्ती स्यान्महाराष्ट्रीशौरसेन्योस्तु संकरात् ।**

अनयोः संकरादावन्ती भाषा सिद्धा स्यात् । संकरश्च एकस्मिन्नेव वाक्ये बोद्धव्यः । चेदिमालवोज्जयिन्यादिरवन्तीदेशः । तद्भवा आवन्ती दाण्डिकादि[1]-भाषा, यदाह भरतः —

‘ दाण्डिकपाणिकपण्डिक[2]नगराधिपदाण्डपाणिकसदृक्षेषु ।
मध्यमपात्रेषु सदा योज्यावन्ती तु[3] नाट्यविधौ[4] ’ ॥ इति ॥

— ‘ एस किरादो मअमणु[5]सरंतो वेदसलआगहणं पइट्ठो ’ [ = एष किरातः मृगमनुसरन् वेतसलतागहनं प्रविष्टः ] । अत्र किरादो वेदस इति शौरसेनी[6] । अन्यानि पदानि[7] महाराष्ट्री ॥

**११. २. क्षश्छः सदृक्षे**

क्षश्छः स्यात् । सरिच्छो । अन्यत्र खणो, खमा, खारं ॥

**११. ३. क्त्वस्तूणः**

तूण एव स्यात् । लंकं गंतूण सीआ दिट्ठा[8] ॥

**११. ४. तिङां ज्ज ज्जा भविष्यति ॥ १७२ ॥**

भविष्यत्काले विहितानां तिङां ज्ज ज्जा इति द्वौ स्याताम् । मोज्ज, मोज्जा । नान्ये स्सहादयः ॥

**११. ५. मध्ये च[9]**

धातुतिङोर्मध्ये च ज्ज ज्जा स्याताम् । देज्जउ, देज्जाउ ॥

**११. ६. हो भुवः**

भुवो हो[10] स्यात् । होइ ॥

---

1 G °न्यावाल्हीन्यादि०. 2 UG दाण्डादि०; IO दाण्णादि ( -वि in O ).
3 G माणिक. 4 G च.
5 UI मअणुस०; O मअ०; G agrees with B.
6 G सौरा०. 7 IO om.
8 U °साआ दट्ठी; IO °गतुण साआ दट्ठी; G °पभूण साआ दट्ठी.
9 UIO om. 10 IO होअं.

११. ७. **पेच्छो दृशेः स्यात्**

नान्ये महाराष्ट्रीसिद्धाः । पेच्छदि ॥

११. ८. **दरिसो णिङि ।**

दृशेर्दरिसः स्यात् । दरिसेदि । दरस इति कश्चित् । दरसेदि[11] ॥

११. ९. **शृणोत्यादेर्येका सुव्वाद्याः**

स्युः । सुव्वइ, लिज्जइ, भण्णए, गम्मए, दुव्वइ, दुब्भई[12] इत्यादयः ॥

११. १०. **प्राग्वत्सोच्छमादयः ॥ १७४ ॥**

प्राग्वत् महाराष्ट्रीवत् । शृणोत्यादेः सोच्छमादयः स्युः । सोच्छं, वोच्छं, रोच्छं इत्यादयः ॥

११. ११. **धातूनां द्वे पदे स्यातां**

परस्मैपदमात्मनेपदं चेति । भणइ, भणए । वड्डइ, वड्डए ॥

११. १२. **चिअ चेअ इवार्थकौ[13] ।**

चंदो चिअ मुहं, चंदो चेअ मुहं । एवार्थेऽपि स्यातामेव । अत्रोक्तविशेषादन्यत्र महाराष्ट्रीशौरसेन्योरैच्छिकः संकरः ॥[14]

**११. १३. आवन्त्यामेव बाह्लीकी किं तु रस्यात्र लो[15] भवेत्॥१७५॥**

— ‘ सलसिलुहसोलहणिब्भलो[16][17] मालुदो वहइ ’ [ = सरसिरुहसौरभनिर्भरः मारुतः वहति ] । — ‘ धूर्तादिभाषा बाह्लीकी ’ इति भरतः ॥

इति श्रीमार्कण्डेयकवीन्द्रकृतौ प्राकृतसर्वस्वे भाषाविवेचने

आवन्तीबाह्लीक्योरनुशासनमेकादशः पादः॥ ११ ॥

---

11 G entirely om. portion from दरस up to this. UIO om. portion from कश्चित् to दरसेदि. B marks the line with asterisk.

12 BO °अंदि; om. according to UIG.

13 G चिअ चेअ इवार्थे द्वौ; U चिअ चेअ इवार्थकौ. IO चिअ चेअ इदार्थकौ.

14 O om. this sent.

15 IO रसातलो; G रसीतलो.

16 UGIO °रुह°

17 Mss. °भणो.

## द्वादशः पादः ।

अथ मागधीभाषानुशिष्यते ॥

१२. १. **मागधी शौरसेनीतः**

सिध्यतीति शेषः । — ' राक्षसभिक्षुक्षपणकचेटाद्या मागधीं प्राहुः, इति कोहलः ॥

१२. २. **षसोः शः**

स्यात् । '– माणुशमुंडेण शोणिअं पिअशि ' [ = मानुषमुण्डेन शोणितं पिबसि ] ॥

१२. ३. **रस्य लो भवेत् ।**

–' लुहिलप्पिआ इदो एहि ' [ = रुधिरप्रिय इतः एहि, Ve. III. p. 118 ] ॥

१२. ४. **क्षस्य श्कः**

स्यात् । – ' अम्हाणं लश्कशाणं केलिशे अणुक्कोशे ' [ = अस्माकं राक्षसानां कीदृशः अनुक्रोशः ] ॥

१२. ५. **न क्खुशब्दस्य**

क्खस्य श्को न स्यात् । – ' एशे क्खु लश्कशे ' ॥

१२. ६. **वसतौ तस्य धो भवेत् ॥ १७६ ॥**

– ' हद्धी शुवेले लोमे वशधिं कलेदि ' [ = हा धिक्, सुवेले रामः वसतिं करोति ] ॥

१२. ७. **स्त्थैद्रुष्ट्च्छानाम्रुपरिस्थः शः**

स्यात् । विश्तैलो । उवश्यिदं । पश्टणं । निश्ठुलं । पेश्छदि ॥

---

1 B inserts वा here which goes against metrical discipline as well as against the reading of Mss.

2 U 'वदि शुवेके मामे ; GIO भदि शुवेके मामे ; evidently due to the confusion of scribes with regard to Oriya script.

3 IO उस्थिव; G उस्थव.

4 U पण्टं ; GI पर्ण्णं ; O पर्ण्णो .

१२. ८. बुलुम्बुश्छायाम् ।
भुश्कौ ॥

१२. ९. थो हः
स्यात् । अनादावेव । लुहिलं । महुलं । थस्य हः कैश्चिदिति वक्तव्यम् । – ' महुलातलं गच्छ ' [ = मथुरातलं गच्छ ] ॥

१२. १०. गौरविते गोमिकः
– ' एशे गोमिके पुढुमं अशीअदु ' [ = एषः भद्रः प्रथममश्नातु ] ॥

१२. ११. वयस्ये वअंशः स्यात् ॥ १७७ ॥
– ' एशे वअंशे आअश्छदि ' [ = एषः वयस्यः आगच्छति ] ॥

१२. १२. स्यालस्य शिआलः स्यात्
–' एशे लाअशिआले ' [ = एषः राजश्यालः ] ॥

१२. १३. कोष्णादेः कोशणादिः स्यात् ।
कोशणं । मंदोशणं । कदुशणं । कवोशणं ॥

१२. १४. हृदयस्य हडक्कं स्यात्

१२. १५. मातुः स्यान्माईका

१२. १६. बटौ वडुव्वः ॥ १७८ ॥

१२. १७. गणनायां गण्णा स्यात्

१२. १८. पिशाचके पिश्वः प्रोक्तः ।

१२. १९. वृक्षे वंश्वो

---

5 IO om.; U मुश्की ; G मुश्कीं. 6 G om.

7 UGIO °पति(-धि in G )मं अगअदु.

8 Mss. seem to have combined 15 and 16 in a very corrupt way:
G— नाडः ताविकावशेकतः ; I— सामांतसातिकावशेवतः .
O— क्षसानांतसातिकावशेक्मः ; U— साश्राउः साविकावसेवतः.
The word माईका as suggested by me approaches the reading of Rt, माईआ ; cf. II. 2. 24 and also see Notes, Pk. P. 131. The reading of B is not probably the correct one.

9 B brackets डु ( whereas U lacks it ) ; cf. Rt. II. 2. 23.

10 UGIO पिवेः ; for पिश्व see Grammatik. 572 ; -व seems to be a suffix. 11 UGIO वृक्षो.

१२. २०.    स्त्वे लदनं

स्पष्टानि । कुक्षिमत्यां कुच्छिमईत्येके[12] ॥

१२. २१.    चजयोरुपरि यः स्यात् ॥ १७९ ॥

यकारागमः । य्चिरं । य्जाओं[13] ॥

१२. २२.    के दीर्घो वा

कप्रत्यये परे पूर्वो दीर्घो वा स्यात् । लाउस्ताके, लाउस्तके[14] ॥

१२. २३.    क्त्वो दाणिश्च

स्यात् । गश्छिदाणि । पक्षे गश्छिअ, गडुअ ॥

१२. २४.    क्वचिदित्

क्त्वास्थाने स्यात् । 'पशुमालि कलेदि' [ = पशुमारं करोति, Śāk. VI. 123 ] ॥

१२. २५.    उद्वापयोः स्थाने ।

स्यात् । उमण्णदि[15] । उशल्दि ॥

१२. २६.    सौ पुंस्येदितौ

पुंसि सौ परेऽकार एदितौ स्यात् । – 'शिलि मुंडिदे' [ = शिरः मुण्डितम्, Mṛ. VIII. 3 ] ॥

---

12 B °महिकेत्येके ; UIO कुक्षिमनेत्येके ; G कुक्षिमकेत्येके ; em. is mine for no Ms. conforms to the reading of B ; cf. also Rt. II. 2. 24. For कुच्छिमई see Grammatik, p. 321.

13 B रिवअ ; U य्जअ ; IO स्चअ ; G य्याअ ; em. is mine according to U. Also cf. "The pronunciation of Pkt. Palatals". JRAS, 1913, p. 392.

14 These two exs. are given as follows :

B लाउस्ताके, लाउस्तके ;    U लाउण्ताके, लाउणके ;

G लाउण्णाके, लाउणके ; IO लाउण्डाके. लाउस्तणके (लाउणके in O).

The Skt. equivalent of the word is राजपुत्र which has got two optional forms राअउत्त and राउत्त in Pkt. The latter form with क affix assumes the two forms thus given by Mk. in Paiś. dialect.

15 G om. this and the following ex. UIO read उमण्दि for the following ex. उशल्दि.

१२. २७. एदोतौ संबोधने प्राय: ॥ १८० ॥

पुंसि संबोधने अकारे एदोतौ स्यात् । हे वअंशे, हे वअंशो । प्रायोग्रहणात् —हे गोमिका, हे भट्टिदालआ ॥

१२. २८. आह्वाऽऽक्षेपे

पुंसि संबुद्धौ अकार आत् स्यादाक्षेपे । -- 'अले ले च्चेलआ' [= अरे रे चेटक ] । चकारात् च्चेलए, च्चेले ॥

१२. २९. हो वा ङसो भवेत्प्राक् च[16] दीर्घः स्यात् ।

अत इति विभक्तिविपरिणामेन पञ्चम्यन्त[17]मनुवर्तते । जाह । ताह । लश्कशाह ॥

१२. ३०. अहमित्यर्थे हके हके च हगे[18] हगे हगा चेति ।

पञ्च स्युः । हके घडुकएँ[20] ॥

१२. ३१. युष्मानर्थे तुम्हं तुम्हे स्यात्[21]

तुम्हं पुश्छामि, तुम्हे वा ॥

१२. ३२. चिट्टस्य तु श्चिंण्टः ॥ १८१ ॥

स्यात्[23] । श्चिण्ट ले बाणले श्चिण्ट ॥

---

16 GIO om. 17 GIO om. 18 Mss. पञ्चमी.

19 UBIO हग्गे ; G हगे; B brackets हगे after this word ; both the readings are acceptable. Mss. read हगी for हगा. For हगे cf. Rt. II. 2. 28 ; also see Grammatik, 142, 202, 417.

20 UIG णडुक्कओ; G णयुक्कओ ; evidently due to confusion arising out of misreading the Oriya script.

21 B excludes this from Sū., whereas Mss. include it rightly in keeping with the demand of the metre.

22 The reading is adopted after B. Mss. are very corrupt :

G— विट्टस्य चिंट्टिता स्यात्, चिट्टिके ;

IO— विट्टस्य चिट्टि(-ट्टी)आ स्यात्, चिट्टके ;

U— चिट्टस्य तु चिट्टीआ स्यात्, चिट्टले ;

To find contrast with this form as given above, cf. Tv. III. 2. 42 and Lak. III. 2. 42. Mss. om. portion from बाणले.

23 According to Mss.

१२. ३३.   भविष्यति भुवः स्सातां भविस्सदि हुवीअदि ।

१२. ३४.   कृम्मृम्गमीनां क्तो डस्ते कमगाश्च

एषां क्तो डः स्यात्, ते कमगाश्च स्युः । कडे । मडे । गडे ॥

१२. ३५.   क्वचिच्च दः ॥ १८२ ॥

क्तो दः स्यात् । ते कमगाश्च । कदे । मदे । गदे ॥

१२. ३६.   लुग्व्यत्ययश्च बहुलं सुपां

स्यात् । – 'पशुमाल कलेदि दालुणे' [ = पशुमारं करोति दारुणम्, Śāk. VI ] । पशुमाल इत्यत्र अमो लुक् । दालुणे इत्यमः सुः ॥

१२. ३७.   दीर्घस्तिङां क्वचित् ।

ओशलधा ले ओशलधा । एवमन्यत्र ॥

अथार्धमागधी ।

१२. ३८.   शौरसेन्या अदूरत्वादियमेवार्धमागधी ॥ १८३ ॥

स्पष्टम् । – 'राक्षसीश्रेष्ठिचेटानुकम्प्यादेरर्धमागधी' इति भरतः । यथा— 'अय्ज वि णो शामिणीए हिलिम्बादेवीए पुत्तघडुक्कअशोए ण उवशमदि' [ = अद्यापि नः स्वामिन्याः पुत्रघटोत्कचशोकः न उपशाम्यति, Ve. III. p. 122 ] ॥

---

24 According to Mss.; B भवीअदि.

25 B कम्प्यो॰; UGIO कंपा॰; em. is mine, the reading of B being doubtful and that of Mss. faulty. O om. the first two words of this line. For the word अनुकम्प्य, see Apte's Skt. Eng. Dic. p. 19.

26 This portion is written as follows: U— पुत्तपडक्क शोणए; GIO— पुत्तपक्कशोणए; here the actual reading शोए ण has been misread as शोणए, and the confusion between प and घ in case of the real word घडुक्क is also noticed.

दाक्षिणात्यायास्तु न लक्षणं नोदाहरणं च कुत्रचित् दृश्यते । केवलमनिरुद्धभट्टेन—

दाक्षिणात्यपदालम्बि संस्कृताङ्गं विजृम्भितम् ।
काव्यं पीयूषनिष्यन्दि दाक्षिणात्यमितीरितम् ' ॥

इत्युक्तम् ॥

इति श्रीमार्कण्डेयकवीन्द्रकृतौ प्राकृतसर्वस्वे भाषाविवेचने
मागध्यर्धमागध्योरनुशासनं द्वादशः पादः ॥ १२ ॥

समाप्तं भाषाविवेचनम् ।

27 UGIO दाक्षिणात्या कुत्रचिद् (IO om. द्); reading adopted after B.

## अथ त्रयोदशः पादः ।

अथ विभाषा । तत्र प्रथमं शाकारी तावदनुशिष्यते ।

**१३. १. मागध्याः शाकारी**

सिध्यतीति शेषः । शकारस्येयं शाकारी । शकार[1]श्च—

‘ राज्ञोऽनूढाभ्राता श्यालस्त्वैश्वर्यसंपन्नः ।
मदमूर्खताभिमानी शकार इति दुष्कुलीनः स्यात् ॥’

इत्युक्तः । अस्यां यत्र विशेषलक्षणं नास्ति तन्मागधीवत् ॥

**१३. २. क्षस्य श्चो वा सदृक्षदुष्प्रेक्षे ।**

अनयोः क्षस्य श्चो वा स्यात् । शलिश्चे । दुप्पेश्चे । पक्षे शलिच्छे, दुप्पेच्छे ॥

**१३. ३. श्चिण्टो ष्चिश[3] इत्येके**

ष्चिशदि ॥

**१३. ४. स्थक्खौ क्वापि प्रकृत्यापि ॥ १८४ ॥**

तिष्ठतः । — ‘ अत्थाणंगदे पंडिदे विअं वक्खाणांइं कलेदि ’ [ = आस्थानगतः पण्डितः इव व्याख्यानानि करोति ] ॥

**१३. ५. को बहुलं**

स्यात् । — ‘ एशके दाशकाए पुस्तंके ’ [ = एषः दास्याः पुत्रः ] ॥

---

1 UIO om. but BG retain.

2 B °नूढो(ढा) ; U °नूढपः ; G °नुतपो ; IO °नुतपः. All these being defective, em. is mine. Cf. SD. III. 53.

3 Mss. श्चिश्चे for श्चिण्टो ; BU श्चिश ; G श्चश ; I षिश ; O षिश ; for the following word. Reading in both these cases is adopted after B. Ex. : G श्चविदि ; UI tally with B ; O पिशदि ; here श्च is confused with च.

4 GIO पद्े.

5 UGIO अ.

6 Mss. °णादि ( °दिं in O ).

7 B पुस्तके ; U पुण्तके ; IO पुंस्तके ; G पुण्डके. The right word seems to be पुस्तके according to Mk. XII. 7 which is also confirmed by the fact that Śākārī owes its origin to Mg. Of all the readings given above, the reading of U apposches the correct one, for श्च is likely to be confused with ण in Oriya script.

